ISSN : 2455-717X




# व्युत्पत्ति
# VYUTPATTI

(A peer reviewed Half yearly Research Journal of Humanities & Social Sciences)

सम्पादक

**प्रो. शिवशंकर मिश्र**

सह–सम्पादक

**डॉ. विजय गुप्ता**

Year : 2023 Vol. 01 Month : June

Published by : **Matrisadanam**, M.I.G - 2, A.D.A Colony, Naini, Prayagraj (U.P.)

पत्रिका
व्युत्पत्ति (अर्द्धवार्षिक)
वर्ष : 08, अंक : 01

प्रकाशन- मातृसदनम्
एम.आई.जी. II, 129, ए.डी.ए.
कालोनी, नैनी, प्रयागराज (उ०प्र०)

प्रकाशन वर्ष
जून-2023

सम्पादक
प्रो. शिवशङ्कर मिश्र

सह-सम्पादक
डॉ. विजय गुप्ता

सम्पादकीय कार्यालय-
मातृसदनम् एम.आई.जी. II,129, ए.डी.ए.कालोनी, नैनी, प्रयागराज (उ०प्र०)
मो.-9411171081
ईमेल: vyutpatti12@gmail.com
वेबसाइट : www.vyutpatti.in



स्वामी, मुद्रक, प्रकाशक एवं सम्पादक
प्रो. शिवशङ्कर मिश्र
सेमवाल प्रिंटिंग प्रेस, ऋषिकेश
(उत्तराखण्ड)





# व्युत्पत्ति
# VYUTPATTI

(A peer reviewed Half yearly Research Journal of Humanities & Social Sciences)


## सम्पादकीय..........

'व्युत्पत्ति' एक सन्दर्भित एवं मूल्यांकित अर्द्धवार्षिक शोध पत्रिका है, जिसमें परम्परा एवं आधुनिकता का सम्यक् संयोजन है। यह संस्कृत, हिन्दी एवं अंग्रेजी तीन भाषाओं में भाषात्रयी के रूप में प्रकाशित हो रही है। देश के विभिन्न विश्वविद्यालयों एवं संस्थानों में अध्यापन–परायण आचार्यों एवं अनुसंधान कार्य में संलग्न विद्वान् शोध ार्थियों के शोधकार्यों की विवेचिका के रूप में व्युत्पत्ति का प्रकाशन किया जा रहा है।

व्युत्पत्ति पत्रिका का नियमित प्रकाशन हो रहा है। हिन्दी, संस्कृत एवं सामाजिक विज्ञान के अनुसंधान क्षेत्रों में संलग्न शोधार्थियों के लिए यह नितान्त उपयोगी एवं संकलनीय है। अनुसंधाताओं से अनुरोध है कि अपने उत्कृष्ट शोध कार्य के प्रकाशनार्थ 'व्युत्पत्ति' का लाभ अवश्य प्राप्त करें।

पत्रिका के प्रस्तुत अंक के प्रकाशन में परामर्शदातृ मण्डल एवं विषय विशेषज्ञ परीक्षक मण्डल के सभी सदस्यों तथा सह–सम्पादक एवं अतिथि सम्पादकों के समन्वित प्रयत्न से ही यह अंक प्रकाशित हो सका है। अतः सभी महानुभावों के प्रति हार्दिक कृतज्ञता प्रस्तुत करते हुए पत्रिका का प्रकृत अंक विद्वान् पाठकों को समर्पित कर रहा हूँ।

धन्यवाद!


प्रो. शिवशङ्कर मिश्र

शोधविभागाध्यक्ष

श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विश्वविद्यालय, नई दिल्ली– 110016




## अनुक्रम.....

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# गुणदोषौ बुधो गृह्णन्नित्यत्र साधर्म्यधर्मविचारः

- डॉ.सौरभदुबे*

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।

वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम् ॥

इति न्यायात्किञ्चिद्विचारः अत्र प्रस्तूयते। उप समीपे, मीयते परिछिद्यते अनयेति उपमा। आतश्चोपसर्गे[1] करणे अङि पङ्कजादिवद्योगरूढं[2] यद्वा उपमीयते इति उपमा। आतश्चोपसर्गे भावे अङ्प्रत्यये उपमाशब्दः अभिव्यज्यते ।

उपमाशब्दस्य सादृश्यमित्यर्थः। सुन्दरसादृश्यम् उपमालङ्कारः इति कथ्यते। उपमालङ्कारस्य लक्षणं कुवलयानन्दग्रन्थे श्रीमदप्पय्यदीक्षितवर्य्यैरेवं विहितम् –

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ॥[3]

यत्र सादृश्यलक्ष्मीः द्वयोः उल्लसति सा उपमेति अन्वयः।

यत्र यस्मिन् काव्ये सादृश्यलक्ष्मीः द्वयोः उपमानोपमेययोः उद्भूतसादृश्यम् अथवा व्यङ्ग्यमर्यादां विना चमत्कृतिजनकं सादृश्यम्, यद्वा सहृदयहृदयाह्लादविषयकारि, उल्लसति प्रकाशते तत्र उपमालङ्कारः इत्यस्य अर्थः। सहृदयो नाम येषां काव्यानुशीलनाभ्यासवशाद्वि-शदीभूते मनोमुकुरे वर्णनीयतन्मयीभवन्योग्यता ते स्वहृदयसंवादभाजः सहृदयाः।[4]

---

*** सहायकाचार्यः, साहित्यविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली - 16**

1 सिद्धान्तकौमुदी 3.3.106
2 नागेश्वरी, काव्यप्रकाशः, पृ.220
3 कुवलयानन्दः, कारिका- 4
4 ध्वन्यालोकः, प्रथमपरिच्छेदः

तर्हि उपमाननोपमेययोः प्रकाशमानं सुन्दरं सादृश्यमेव उपमा इत्यभिप्रेतम्। उपमानम् उपमेयं सादृश्यवाचकः साधारणधर्मश्चेति चतुर्भिरंशैः उपेतः अयमलङ्कारः पूर्णः इति, कथ्यते इति विषयोऽयं प्रसिद्ध्यति। चतुर्षु चतुर्णां वा मध्ये एकस्य द्वयोः त्रयाणां वा लोपे लुप्तोपमा इत्यपि। पूर्णोपमाया विषये कुवलयानन्दे श्रीमदप्पय्यदीक्षितवर्य्यैरेकं पद्यमुदाहृतम् । तच्च

गुणदोषौ बुधो गृह्णन् इन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥[1]

ईश्वरः इन्दुक्ष्वेडौ इव बुधः गुणदोषौ गृह्णन् पूर्वं शिरसा श्लाघते परं कण्ठे नियच्छतीति श्लोकस्यास्य अन्वयः। ईश्वरः शिवः, इन्दुक्ष्वेडौ चन्द्रगरलौ इव यथा, यथा ईश्वरः परमशिवः, इन्दुं चन्द्रं क्ष्वेडं गरलं च गृह्णन् उपाददानः पूर्वं चन्द्रं शिरसा मूर्ध्नि श्लाघते वहति, परं गरलं कण्ठे गले नियच्छति संस्थापयति निक्षपतीति तथा बुधः साधुः, गुणदोषौ दाक्षिण्यादिगुणं दोषम् अकर्तव्यं च गृह्णन् जानीनः पूर्वं गुणं शिरसा श्लाघते शिरःकम्पपूर्वकम् अभिनन्दति परं दोषं कण्ठे हृदि[2] नियच्छति निगूहति अन्तःकरोति, बहिर्न प्रकाशयतीति उदाहरणार्थः। अभिप्राय एष एव सज्जनानामयं स्वभावो भवति यत् सज्जनाः लोकस्य गुणं दोषं जानन्ति, गुणं प्रशंसन्ति किन्तु दोषम् अन्येषां पुरतः न प्रकटयन्ति बहिर्न कथयन्तीति बुधस्वभावपरकोऽयं श्लोकः।

कुवलयानन्दकारैः श्रीमदप्पय्यदीक्षितैः उपमालङ्कारे तत्रापि पूर्णोपमालङ्कारस्य उदाहरणतया स्वीकृतमिदं पद्यम्। बुधः उपमेयः, शिवः उपमानम्, इन्दुक्ष्वेडाविव इत्यत्र इव सादृश्यवाचकः चतुर्थः साधारणधर्मः अपेक्षितः कः साधारणधर्मः इत्युक्ते सति-उपमानोपमेययोरनुगतः धर्मः साधारणधर्मः।

उपमानोपमेयविद्यमानात् कश्चन धर्मः अपेक्षितः इत्यतः कोऽत्र साधारणधर्मः? न कश्चित्। उभयानुगतः उपमानोपमेयानुगतः एकः धर्मः न विद्यते कथन्तर्हि पूर्णोपमेति पूर्वपक्षस्य विप्रतिपत्तिः। इत्थं शङ्का विव्रियते-

अत्र विद्यमानः धर्मः न एकः उपमानगतः धर्मः अन्यः उपमेयगतः धर्मः अन्यः कथमिति चेत्। तथाहि-

उपमानोपमेयगतो धर्मोऽस्ति उपमानभूतशिवगतचन्द्रगरलसम्बन्ध्युपादानम् उपमेयभूतबुधगत गुणदोषसम्बन्धिज्ञानम् ।

1 कुवलयानन्दः, पृ. 5
2 कुवलयानन्दः, पृ. 3-5

उपमानपक्षे शिवे चन्द्रगरलयोर्ग्रहणपूर्वकं शिरसि चन्द्रवहनं परतश्च कण्ठे गरलस्थापनमिति उपमाने धर्म आगतः।

उपमेयपक्षे बुधे गुणदोषयोस्संवित्पूर्वकं शिरःकम्पपुरस्सरगुणाभिनन्दनम् परतश्च कण्ठे दोषनिक्षेपणम् तदनभिव्यञ्जनमिति उपमेये धर्म आगतः।

उपमाने उपमेये च धर्मः भिन्नः इति कृत्वा नायं पूर्णोपमालङ्कारः साधारणधर्मविरहादिति शङ्काकायाः आशयः।

उत्तरपक्षे राद्धान्तिना इत्थं समाधानं क्रियते-

साधारणधर्मः अनेकविधो भवति, अनुगामिसाधारणधर्मः, वस्तुप्रतिवस्तुभावापन्नः, बिम्बप्रतिबिम्बभावापन्नः, श्लिष्टसाधारणधर्मः, समासान्तर्गतसाधारणधर्मश्चेति। प्रकृतस्थले बिम्बप्रतिबिम्बभावापन्नः साधारणधर्मः स्वीकर्तव्यः।

तल्लक्षणमिति- "उपमानोपमेययोः परस्परसादृश्यात् पृथगुपादानम्" अर्थात् उपमानस्य उपमेयस्य च सादृश्यातिशयात् अभिन्नयोः पृथक् ग्रहणमिति बिम्बप्रतिबिम्बभावापन्नः साधारणधर्मः कथ्यते। उपमानोपमेययोः विद्यमानः धर्मः अत्यन्तं सदृशो भवति किन्तु पृथक् उपात्तः भवति। पृथक् उपात्तयोः तयोः धर्मयोः सादृश्यातिशयात् अभेदतया उपादानमेव बिम्बप्रतिबिम्बभाव इति साधारणधर्मः कथ्यते।

लोकेऽपि यथा शरीरं बिम्बं विलोक्य दर्पणे प्रतिबिम्बं च दृष्ट्वा बिम्बप्रतिबिम्बयोः अभेदः व्यवह्रियते। तथैव अत्रापि उपमाने उपमेये च भिन्नतया दृश्यमानः अपि धर्मः अत्यन्तं सादृश्यात् अभिन्नतया उपपादनीयः इति बिम्बप्रतिबिम्बभावस्य अर्थः।

तस्मात्कथमत्र बिम्बप्रतिबिम्बभावेन एकः धर्मः सेत्स्यतीति उपस्थाप्यते- पूर्वेक्तरीत्या उपमानोपमेययोः भिन्नावेव धर्मौ इति ज्ञातम्। सङ्क्षेपतः स धर्म इत्थमुच्यते-

शिरोवहनकर्मीभूतः यश्चन्द्रः कण्ठस्थापनकर्मीभूतः यः क्ष्वेडः तदुभयकर्मकमुपादानमिति उपमाने शिवे धर्मः शिरःकम्पाभिनन्दनकर्मीभूतः यः गुणः कण्ठप्रतिबन्धनकर्मीभूतः यः दोषः तदुभयकर्मकज्ञानमिति उपमेये बुधे धर्मः भिन्नतया दृश्यते। अनयोः बिम्बप्रतिबिम्बभावमाश्रित्य ऐक्यं सम्पादनीयम्। कथमित्युच्यते बिम्बप्रतिबिम्बभावः अभेदाध्यवसायमूलको भवति। गृह्णन्नित्युक्ते उपादानं, ज्ञानम् , श्लाघते इत्यनेन वहनम् अभिनन्दनम्, नियच्छतीत्यनेन संस्थापनम् प्रतिबन्धनम् इति कृत्वा प्रत्येकं द्वयोः द्वयोः अर्थयोः अपि एकशब्दप्रतिपाद्यत्वात् अभेदाध्यवसायमूलकतया बिम्बप्रतिबिम्बभावः स्वीकृते सति स धर्म इत्थं ज्ञातव्यो भवति –

शिरोवहनाभिन्नशिरःकम्पपूर्वकाभिनन्दनकर्मीभूतः यः चन्द्राभिन्नो गुणः, कण्ठस्थापनाभिन्न-कण्ठप्रतिबन्धनकर्मीभूतः यः क्ष्वेडाभिन्नः दोषः तदुभयकर्मकम् उपादानाभिन्नं ज्ञानम् इति धर्मः स्वीकरणीयः भवति। इति स्थलेषु अभेदाध्यवसानमूलतया बिम्बप्रतिबिम्बभावेन अभेदे स्वीकृते सति अयं धर्मः साधनीयः।

## सन्दर्भग्रन्थाः


1 अमरकोशः

2 कुवलयानन्दः

3 शाब्दबोधः

4 ध्वन्यालोकः लोचनटीका

5 सिद्धान्तकौमुदी

6 काव्यप्रकाशः

7 काव्यप्रकाशः (नागेश्वरीटीका)


* * *

ISSN : 2455-717X

व्युत्पत्ति

वर्ष : 8, अङ्क (01) जून–2023

# शृङ्गारप्रकाशे क्लृप्तस्य एकार्थीभावसम्बन्धस्य समीक्षणम्

- **बद्रीविशालपाण्डेयः***

अविच्छिन्नशास्त्रपरम्परायां व्याकरणशास्त्रस्य महत्त्वं जानन्त्येव जगति विद्वांसः, लोके सामान्यतोऽर्थावगतिः शब्देनापशब्देन च भवति, तदुक्तं महर्षिणा पतञ्जलिना- **'समानायामर्थावगतौ शब्देन चापशब्देन च धर्म नियमः क्रियते'**[1] शास्त्रप्रक्रियानिर्वाहाय लौकिकविग्रहवाक्यम् अलौकिकविग्रहवाक्यञ्च कल्प्यते, पुनरपि वाक्यं समस्तासमस्तभेदेन विभज्यते, समस्तवाक्ये वैयाकरणैः एकार्थीभावलक्षणसामर्थ्यं स्वीक्रियते, व्यस्ते तु व्यपेक्षालक्षणसामर्थ्यमङ्गीक्रियते एकार्थीभावस्वीकारे मानन्तु- **'किं पुनः समर्थन्नाम? पृथगर्थानामेकार्थीभावः समर्थवचनम्, क्व पुनः पृथगर्थानि, क्वैकार्थानि, वाक्ये पृथगर्थानि राज्ञः पुरूष इति समासे पुनरेकार्थानि राजपुरूष'** इति समर्थसूत्रस्थं[2] भाष्यमेव, भोजराजेन सामर्थ्यस्य निरूपणावसरे शृङ्गारप्रकाशे प्रोक्तम्[3]।

व्यपेक्षावतां पदार्थानां मिथः सम्बन्धितरूपता सामर्थ्यम्, तथा व्यपेक्षायाः स्वरूपमित्थमुक्तम् तत्रोद्भूतसम्बन्धव्यतिरेकाणां पदार्थानामितरेतरप्रत्याकाङ्क्षा व्यपेक्षा, सा व्यपेक्षा सन्निहिते योग्ये च भवति यथा देवो वर्षति अत्र वर्षणक्रियाकर्तारं विनाऽनुपपन्ना अतः सन्निहितं योग्यं च देवमपेक्षते, अत एव वाक्ये व्यपेक्षायाः स्वरूपं संघटते एकार्थीभावस्य स्वरूपं प्रतिपादयति भोजराजः- व्यपेक्षावतां समर्थानामन्वितार्थानां च पदार्थानां तिलतण्डुलवत् क्षीरनीरवत् पांसूदकवच्च यदविभागरूपेण भवनं स एकार्थीभावः, एकार्थीभावस्य व्यपेक्षातो विशेषः क इति जिज्ञासायामुच्यते यत् व्यपेक्षायां सङ्ख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगः क्रमानियमो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः

***शोधच्छात्रः, संस्कृतविभागः, कलासङ्कायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी**

1 महाभाष्यम्, पस्पशाह्निकः, पृ. 99

2 पा.सू.सं. 2/1/2

3 शृङ्गारप्रकाशः, अष्टा.प्र., पृ. 397

शब्दान्तरप्रयोगश्च भवति, एकार्थीभावे त्वेकपद्यमैकशब्द्यमैकस्वर्यमेकविभक्तित्वमेवद्भाव एकशेषः अनेकविधानामैक्यमेकविधानां चानैक्यमिति, व्यपेक्षालक्षणसामर्थ्ये सङ्ख्याविशेषस्य च भानं यथा- राज्ञः-पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुषः, अत्र क्रमेण एकत्वस्य, द्वित्वस्य बहुत्वस्य च भानं सम्भवति, एकार्थीभावलक्षणसामर्थ्ये राजपुरुष इति प्रयोगे तु एकत्वादीनां न भानं व्यपेक्षायां व्यक्ताभिधानं यथा राज्ञः पुरुष इत्यत्रैव अत्र राज्ञः षष्ठ्यन्तं पुरुषः प्रथमान्तं पदं स्पष्टतयाऽवगम्यते, किन्तु राजपुरुष इति विशिष्टाभिधाने लोण्मध्यमपुरुषैकवचनं विभक्तिलोपो वेति नाऽवगम्यते, व्यपेक्षालक्षणसामर्थ्ये उपसर्जनस्य विशेषणं सम्भवति ऋद्धस्य राज्ञः पुरुष इति एकार्थीभावसामर्थ्ये तु उपसर्जनस्य विशेषणं न सम्भवति राजपुरुष इत्येव रूपम्, व्यपेक्षालक्षणसामर्थ्ये चकारस्य सम्बन्धो भवति यथा- राज्ञः पुरुषो ब्राह्मणस्य च इति एकार्थीभावे तु राजपुरुष इत्येव रूपम्, व्यपेक्षायां क्रमस्य नियमोऽपि नास्ति, एकार्थीभावलक्षणसामर्थ्ये तु क्रमस्यापि नियमः, व्यपेक्षायां पदानां व्यवधानमपि सोढव्यम्, एकार्थीभावे व्यवधाने तु एकार्थीभावस्यैव निवृत्तिः, व्यपेक्षायां यथेष्टमन्यतरेणाभिसम्बन्धो भवति राज्ञः पुरुषो भार्या वेति एकार्थीभावे तु नियमेन पुरुषेणैव सम्बन्धो न भार्यया व्यपेक्षायां शब्दान्तरस्यापि प्रयोगो सम्भवति, दध्नोपसिक्तं परिग्लानोऽध्ययनायेति, एकार्थीभावे तु शब्दान्तरस्य प्रयोगो न सम्भवति, तत्र दध्योदनं पर्यध्ययन इत्येव रूपं तत्र भवति अयमपि विशेषः- एकार्थीभावे त्वैकपद्यमैकशब्द्यमैस्वर्यमेक-विभक्तित्वमेकवद्भावः तथा चैकशेषः अनेकविधानामैक्यमेकविधानां चानैक्यमपि सम्भवति, क्रमेणोदाहरणानि यथा- एकार्थीभावे एकपद्यम्- आत्मना तृतीयः कण्ठेकालः, अत्र विभक्तेर्न लुक् तथापि पदमेकमेव क्रमेण आत्मना तृतीयः **'आत्मनश्च'**[1] इति शास्त्रस्योदाहरणम्, कण्ठेकाल इति प्रयोगे **'अमूर्धमस्तकात्स्वाङ्गादकामे'**[2] इत्यनेन विभक्तेरलुकि एकार्थीभावेन एकपदमेव, एकशब्द्यं यथा- पितरौ भ्रातराविति एकस्वर्यं यथा- चित्रगुः, ब्राह्मणकम्बल इति पूर्वत्र **'बहुव्रीहौ प्रकृत्या पूर्वपदम्'**[3] इत्यनेनानुशासनेन पूर्वपदप्रकृतिस्वरः, अपरत्र समासस्य इत्यन्तोदात्तत्वम्, एकविभक्तित्वमित्यस्योदाहरणम्- नीलोत्पलम् एकाद्भावो गवाश्वम्, अश्ववडवम् **'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्'**[4] इत्यनेन शास्त्रेण एकवद्भावः, एकशेषस्योदाहरणम्- अक्षाः वृक्षाः अनेकविधानामैक्यं यथा आत्मनः पुत्रमिच्छति पुत्रीयति अत्र[5] सुप आत्मनः क्यच् इत्यनेन क्यच् प्रत्ययः मुण्डं करोति मुण्डयति इत्यत्र मुण्डमिश्र-श्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो[6] णिच् इत्यनेन कृञर्थे णिच् प्रत्ययस्य विधानं

1 पा.सू.सं.- 6/3/6
2 पा.सू.सं.- 6/3/12
3 पा.सू.सं.- 6/2/1
4 पा.सू.सं.- 2/4/12
5 पा.सू.सं.- 3/1/8
6 पा0सू0सं0- 3/1/21

क्रियते, एकविधानामनैक्यं यथा- कंसवधमाचष्टे कंसं घातयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयतीति व्यपेक्षायान्तु नैतादृशाः प्रयोगाः, अस्य वाक्यस्यायमभिप्रायः- **'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च'**[1] इत्येकं गणसूत्रम्, तथा चोक्तं श्रीमद्भट्टोजीदीक्षितेन सिद्धान्तकौमुद्याम्।[2]

प्रातिपदिकाद्धात्वर्थे णिच् स्यात् इष्ठे यथा प्रातिपदिकस्य पुंवद्भावर भावटिलोप-विन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशसंज्ञास्तद्वण्णावपि स्युः, एतस्यैव गणसूत्रस्य प्रपञ्चभूतं सूत्रं- तत्करोति तदाचष्टे तेनातिक्रामति धातुरूपञ्च, णिच्-प्रकृतिर्धातुरूपं प्रतिपद्यते, चकारोऽत्रानुक्तस्य समुच्चयार्थः तथा च वार्तिकम्- **'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृति-प्रत्ययापत्तिः प्रकृतिवच्च कारकम्'**[3] इति कंसवधमाचष्टे इत्यर्थे कंसं घातयति रूपम्, अत्र हननं वधः हनश्च वधः[4] इति भावे हन् धातोः अप्प्रत्ययः प्रकृतेर्वधादेशश्च कंसस्य वधः कंसवधः तदन्वाख्यानपरवाक्यसन्दर्भोऽत्र विवक्षितः कंसवधमाचष्टे इत्यर्थे णिच् अप्प्रत्ययस्य कृतो लुक् प्रकृतिभूतस्य हनधातोर्वधादेशस्य च निवृत्तिः तथा च कंस हन् इ इति जाते **'हनस्तोऽचिण्णलोः'**[5] इति सूत्रेण हन्तेस्नकारस्य तकारादेशे हो हन्तेर्ञ्णिन्नेषु इति सूत्रेण कुत्वेन हकारस्य घकारे घातीति ण्यन्तं ततो घातयति रूपम् एवञ्च पुष्ययोगमाचष्टे पुष्येण योजयतीति रूपम्, अत्र **'हेतुमति च'**[6] इति सूत्रे **'नक्षत्रयोगे ज्ञि'** इति वार्तिकार्थप्रदर्शके नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिच् वक्तव्यः कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्, अतः प्रकृतिप्रत्ययापत्तिवचनेन पुष्येण योजयतीति रूपम्, पुनरयमेकार्थीभावो व्यपेक्षावैलक्षण्येन समासतद्धितादिषु त्रिधा भोजराजेन विभक्तम्। तद्यथा-

वाक्यतुल्यार्थः वाक्याधिकार्थः, वाक्यान्यार्थ इति वाक्यतुल्यार्थस्योदाहरणं यथा- वीरः पुरुषो वीरपुरुषः कष्टं श्रितः कष्टश्रित इति, वीरपुरुष इत्यत्र **'पूर्वापरप्रथमचरम-जघन्यसमानमध्यमध्यमवीराश्च'**[7] इति सूत्रेण समानाधिकरणकर्मधारयसमासः, कष्टश्रित इत्यत्र **'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः'**[8] इत्यनुशासनेन द्वितीयातत्पुरुष समासः उभयत्रापि वृत्तिवाक्ये विग्रहवाक्ये च समानमेव बोधः, वाक्याधिकार्थो यथा- गुडेन मिश्राधानाः गुडधानाः शङ्कुलया कृतः खण्डः शङ्कुलाखण्ड उभयत्रापि समस्तपदेन अधिकार्थस्य भानमिति सर्वजनीनोऽनुभवः वाक्यान्यार्थो यथा- कुशं लातीति कुशलः, प्रकृष्टो

1 ग0सू0 203
2 चुरादि प्र0, पृ0सं0 416
3 वा0 1766
4 पा0सू0सं0- 3/3/76
5 पा0सू0सं0- 7/3/32
6 पा0सू0सं0- 3/1/26
7 पा0सू0सं0- 2/1/58
8 पा0सू0सं0- 2/1/24

वीणायां प्रवीणः प्रयोगद्वयेऽपि वाक्यान्यार्थस्य प्रतीतिः तत्सर्वमत्र एकार्थीभावबलेनैव गम्यते। पुनरप्ययमेकार्थीभावो चतुर्विंशतिप्रकारेण भोजराजेन विभाजितः।

अयमेकार्थीभावः समासे भवति, पदविधिरिति शास्त्रात् सामर्थ्ये एव समासः न त्वसामर्थ्ये, यद्येवं नाङ्गीक्रियते तर्हि भार्या राज्ञः पुरुषो देवदत्तस्य इत्यत्रापि राज्ञः पुरुषपदयोः समासापत्तिः, तच्च सामर्थ्यम् एकधर्मावच्छिन्ननिरूपितैकशक्तिमत्त्वरूप एकार्थीभावः, उक्तञ्च भाष्ये[1] एकार्थीभावो वा सामर्थ्यं स्याद् व्यपेक्षा वेति, व्याख्यातञ्च कैयटेन प्रदीपे **'यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद् व्यर्थान्यर्थान्तराभिधायीनि वा स एकार्थीभावः, परस्पराकाङ्क्षारूपा व्यपेक्षा एवञ्च पक्षद्वयमुपस्थाप्य व्यपेक्षापक्षं दूषयता महर्षिणा पतञ्जलिना भणितं समर्थः पदविधिरिति सूत्रभाष्ये अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति'** शाब्दिकानां सिद्धान्ते एकार्थीभावे समासविधानात् समासस्थले राजपुरुषादौ विशिष्टे शक्तिस्तत्र पदानि निरर्थकानि पदेषु वर्णवत्। भूषणसारे कौण्डभट्टेनोक्तम्- पदे वर्णवत् वृत्तौ पदानामानर्थक्यं तथा प्रभाटीकायां[2] टीकाकृता व्याख्यातं यत्- शक्तरामादिपदघटकरेफादिवर्णानामिव वृत्तिघटकपदानामप्यानर्थक्यमिति भावः, यद्यत्र पदानामर्थवत्वमङ्गीक्रियते चेत् तुल्ययुक्त्या वर्णानामप्यर्थवत्वापत्तिः समापतति, अत्र वृत्तिघटकेषु पदेषु अर्थवच्छब्दनिमित्तकं कार्यं प्राग्भाविनमर्थमादाय प्रत्ययोत्तरपदयोश्चेत्यादि शास्त्रारम्भसामर्थ्याद्वा भवत्येव, अत एव महाबाहुरित्यत्र समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतो महतः आकारादेशो भवतीत्यर्थेन **'आन्महतः समानाधिकरणजातीययोः'** इत्यनेन शास्त्रेण आत्वं सिद्ध्यति।

एकार्थीभावरूपशक्तिमन्तरेणैव नैयायिकैः राजपुरुष इत्यादौ राजपदादेः राजसम्बन्धिनि लक्षणा तथा राजसम्बन्धवदभिन्नः पुरुष इति शाब्दबोधः, तेषामियं प्रक्रिया यत्- समासघटकराजादिपदानां प्रत्येकं नृपादिषु पृथक् शक्तिः स्वीक्रियते यतोहि- राजा वदति, राजानं प्रणमति, पुरुषोऽस्ति- पुरुषमानय इत्यादौ पृथक्-पृथक् प्रत्येकं पदं शक्तिविशिष्टमङ्गीकरणीयमेव राजपुरुषादिसमासेऽपि तयैव शक्त्या लक्षणया वोपस्थितयोरर्थयोः परस्परमन्वये बुभुत्सितार्थविषयकशाब्दबोधो सम्भवति पुनः राजपुरुषादिसमासे राजसम्बन्धि- पुरुषनिरूपितैकाऽतिरिक्ता शक्तिः समुदाये नाङ्गीकरणीया, अनन्यलभ्यो हि शब्दार्थ इति नियमात् अत्रोच्यते शाब्दिकैः एकधर्मावच्छिन् नशक्तिमत्त्वरूपैकार्थीभाव एवं सामर्थ्यं समासप्रयोजकम्, राजा वदतीत्यादौ राजादिपदानां राजत्वाद्यवच्छिन्ननिरूपितशक्ते-रावश्यकत्वेऽपि राजपुरुषादिसमासे राजसम्बन्धिपुरुषत्वाद् यवच्छिन्ननिरूपितैका शक्तिः स्वीक्रियते, न तु प्रत्येकपदनिष्ठा प्रत्येकराजाद्यर्थनिरूपिता

1 महाभाष्य 2/1/1
2 भूषणटीका, पृ0सं0 270

शक्तिरङ्गीक्रियते, समासे विशिष्टशक्तेरस्वीकारे **'पण्डितो ब्राह्मणः' 'नीलमुत्पलमित्यादौ यथा ब्राह्मणम्'** उत्पलञ्चोदिश्य पण्डितादीनां विधेयतया अन्वयबोधो भवति तथैव पण्डितब्राह्मणो नीलोत्पलमित्यादिसमासे पण्डितादीनां विधेयतया अन्वयबोधापत्तिः, यतोहि उद्देश्यविधेयबोधकारणस्य पण्डितादिप्रत्येकपदनिष्ठशक्तिज्ञानजन्यप्रत्येकार्थोपस्थितेः सत्वात् तादृशः बोधस्तु नेष्टः, समासे शक्तिस्वीकारे तु विशिष्टशक्तिज्ञानजन्यायाः पण्डिताऽभिन्न-ब्राह्मणादिविषयिण्याः विशिष्टोपस्थितेरेव सत्त्वेन पृथगुपस्थितेरभावात् न तादृशबोधापत्तिः, एवं शाब्दिकैः एकार्थीभावस्वीकारे बह्व्यः युक्तयः प्रदर्शिताः, **'एवमयमेकार्थीभावस्तद्धिता ख्यातयोरपि अनन्तप्रकार एवं द्रष्टव्यः'** इति ग्रन्थेन तद्धिते तथाख्याते त्रिधा विभाजितः, एवमनेकरूपेण पदैकार्थीभावं प्रदर्श्य वाक्यैकार्थीभावोऽपि तत्र वाक्यस्वरूपम् **'आख्यातं साव्ययकारकविशेषणं वाक्यम्'** एकतिङ्वाक्यं वा एवं वाक्यानामपि परस्परमुपमानोपमेय-भावादिभिरिवादिशब्दप्रयोगे मुक्तकादिष्वेकार्थीभावो भवति, वाक्यैकार्थीभावाङ्गीकारेणैव क्रियाकारकाभिनिवेशिनोर्युगलक-सन्दानितककलापकुलकादयो वाक्यविशेषाः सन्ति द्वाभ्यां चतुष्पदीभ्यां युगलकम्

**तिसृभिः सन्दानितकम्**

**चतुर्भिः कलापकम्**

**पञ्चादिभिः कुलकमिति सञ्ज्ञा विज्ञायते।**

काव्ये नगरर्तूद्यानचन्द्रार्कोदयार्णववर्णनादिषु प्रबन्धस्य अन्तःपातिनो वाक्यसमूहाः अवान्तरवाक्यतां लभन्ते, तेषामेव प्रकरणव्यपदेशः, पुनरवान्तरवाक्यानां सम्मेलनेन महावाक्यार्थः महाकाव्ये तथा आख्यायिकादौ मुख्यादिपञ्चसन्धिभिरूपक्षेपादिचतुषष्टि-सन्ध्यङ्गैः भारत्यादिरूपवृत्तिचतुष्टयेन यथायोगमुपकृतः अन्योन्यविशेणविशेष्यभावापन्नः महावाक्यार्थरूपेण प्रसिद्धिं लभते, एकार्थीभावो प्रबन्धस्यैव व्यपदेशः, अनेनैव प्रबन्धेन रामादिवद्वर्तितव्यं न रावणादिवद् इत्यादिविधिनिषेधप्रतिभाविशेष उपजायते, तस्यैव चतुर्वर्गैकहेतुत्वं तथा परा महावाक्यैकार्थोऽर्थमूर्त्याविपरिणतमनादिनिधनमखण्डं शब्दब्रह्म इत्यभिधया प्रोच्यते, तदेव परमपुरुषार्थत्वेन कीर्त्यते, तदुक्तं हरिणा-

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**

**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥**[1]

एकार्थीभावो प्रबन्धो वाऽनर्थान्तरं तथा मोक्षरूपपरमपुरुषार्थस्य सिद्धिः अनेन प्रबन्धेन काव्येन च भवतीति भोजराजस्य निगूढाशयः।

---

1 वा०का० 16

## सन्दर्भ-ग्रन्थ-सूची

1. महाभाष्यम्, पस्पशाह्निकः, जयशङ्करलालत्रिपाठी, चौ.कृ.अ., वाराणसी, सन् 1989ई.

2. शृङ्गारप्रकाशः, सम्पादकः- म.म. रेवाप्रसादद्विवेदी, इ.गा.रा.क.के./का.सं. 2007

3. अष्टाध्यायीसूत्रपाठः, सम्पा.- श्रीनारायणमिश्रः, चौ.ओ., संस्करणम् 2014

4. वैयाकरणभूषणसारः, बालकृष्णपञ्चोली, चौ.सं.सं., वाराणसी, वि.सं. 2068

5. वैयाकरणसिद्धान्तकौमुदी, प्र.भा.मो.ला.ब.दा., 2014

6. वैयाकरणसिद्धान्तकौमुदी, द्वि.भा.मो.ला.ब.दा., 2012

7. वैयाकरणसिद्धान्तकौमुदी, तृ.भा.मो.ला.ब.दा., 2011

8. वैयाकरणसिद्धान्तकौमुदी, च.भा.मो.ला.ब.दा., 2018

9. वाक्यपदीयम्, प्रथमो भागः ब्रह्मकाण्डम्, सरस्वतीभवनग्रन्थमाला, स.सं.वि.वि. संस्करणम् 2016

* * *

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# अनुपलब्धिप्रमाणविमर्शः
## (सिद्धान्तबिन्दुवेदान्तपरिभाषासन्दर्भे)

**- जूही गर्गः***

वेदान्तदर्शने स्वीकृतेषु षड्प्रमाणेष्वन्यतमस्य अनुपलब्धिप्रमाणस्य विषये दार्शनिकजगति वैमत्यं वर्तते। सामान्यतः कस्यचित् वस्तुनः स्थानविशेषेऽनुपस्थितिरेव अनुपलब्धिः कथ्यते। सा अनुपलब्धिरेव अभाव इति नाम्नापि ज्ञायते। नैयायिकमते अभावः स्वतन्त्रप्रमाणं नास्ति। येन इन्द्रियेण यस्य पदार्थस्य ज्ञानं भवति तेनैव तस्य पदार्थस्य अभावोऽपि गृह्यते। यथा चक्षुरिन्द्रियेण घटस्य ज्ञानं जायते तर्हि घटाभावस्य ज्ञानमपि चक्षुरिन्द्रियेण एव गृह्यते। नैयायिका: अभावज्ञानार्थं विशेषण-विशेष्यभावसन्निकर्षं स्वीकुर्वन्ति।[1] भाट्टमीमांसकमते अनुपलब्धिप्रमाणं पृथक् प्रमाणमस्ति। तेषां मते प्राप्यपदार्थस्य अनुपलम्भज्ञानम् अनुपलब्धिप्रमाणात् भवति।[2] यस्य वस्तुनः ज्ञानं प्रत्यक्षादिपञ्चकप्रमाणैर्न जायते तस्य ज्ञानम् अभावप्रमाणेन अवबोध्यते।[3] वेदान्तपरिभाषाग्रन्थे अनुपलब्धिप्रमाणस्य स्वीकृतं लक्षणम् इत्थम् अस्ति - **'ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्।'**[4] अर्थात् ज्ञानरूपं यत् करणं तदजन्यो योऽभावानुभवः तस्यासाधारणकारणमेव अनुपलब्धिप्रमाणं कथ्यते यथा भूतले घटाभावः। अत्र घटवस्तुनः ज्ञानाभावकरणम् नाम अनुपलब्धिप्रमाणं एवं घटवस्तुनः अभावविषयकज्ञानम् अभावरूपप्रमेति प्रतिबोध्यम्। प्रकृतलक्षणे चत्वारि पदानि सन्ति - 1. ज्ञानकरणाजन्यम् 2. अभावः 3. अनुभवः 4.असाधारणकारणञ्च। तत्र ज्ञानकरणाजन्यपदनिवेशेन धर्मादि-अतीन्द्रियाभावरूपा-नुमितिप्रमाकरणेऽनुमाने अभावानुभवासाधारणकारणयोः विद्यमानत्वात् लक्षणस्यातिव्याप्तिः

***शोधच्छात्रा, अद्वैतवेदान्तविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविश्वविद्यालयः, नवदेहली**

1 अभावप्रत्यक्षे विशेषण-विशेष्यभावः सन्निकर्षः 'घटाभाववद्भूतलम्' इत्यत्र चक्षुः संयुक्ते भूतले घटाभावस्य विशेषणत्वात् । - तर्कसंग्रह-पृ.-28

2 अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् । अभावाख्यं प्रमाणं स्यात् अभावस्यावबोधकम्। - मानमेयोदय-129

3 प्रमाणं पंचकं यत्र वस्तुरूपे न जायते। वस्तुसत्ताऽबोधार्थं तत्राभावप्रमाणता । - श्लोकवार्तिकम् पृ०-335

4 वे० प० अनुपलब्धि परि०

निवर्त्यते।[1] तथा च लक्षणे अभावपदप्रयोगः प्रत्यक्षप्रमाणेऽतिव्याप्तिनिवारणार्थं कृतम्। यतो हि घटाद्यनुभवः ज्ञानरूपकरणाजन्यत्वे सत्यपि भावरूप एवास्ति न तु अभावरूपः अतः अभावविशेषणप्रयोगात् चक्षुरादावतिव्याप्तिर्न भवति।[2] तथा च देश-काल-ईश्वर-ईश्वरेच्छा-अदृष्टादिसाधारणकारणेषु लक्षणस्यातिव्याप्तिवारणार्थम् असाधारणपदं युज्यते। एवञ्च अनुभवपदं संस्कारेऽतिव्याप्तिवारणाय युज्यते। संस्कारः स्मृतेरसाधारणकारणमस्ति। सा च स्मृतिः वस्तुसत्त्वस्यापि भवति वस्तुसत्त्वाभावस्यापि भवति। तस्याम् अभावरूपास्मृतौ ज्ञानकरणाजन्यत्वमपि विद्यते अतः अनुभवपदयुक्तत्वात् ज्ञानकरणाजन्यघटाभावस्मृतेः असाधारणकारणसंस्कारे लक्षणस्यातिव्याप्तिः न भवति। एवञ्च अनुपलब्धिलक्षणे प्रयुक्ताः चत्वारः भागाः सार्थका एव। एकस्यापि भागस्याभावे अतिव्याप्तिदोषः स्यात्।

**पूर्वपक्षीणामाक्षेपः**

यदि अनुपलब्धिरेव अभावविषयकज्ञानं प्रति कारणमस्ति तर्हि धर्माधर्माभावविषयकज्ञानमपि अनुपलब्धिप्रमाणद्वारा एव स्वीकरणीयम्। किन्तु वेदान्तमते तु तज्ज्ञानम् अनुमानप्रमाणेन भवतीति स्वीक्रियते। एतत्कथं भवितुमर्हति। तत्र समाधानरूपेण वदन्ति परिभाषाकाराः - अनुपलब्धिमात्रेण अभावज्ञानं न भवति अपितु योग्यानुपलब्धिद्वारा अभावविषयकज्ञानम् उत्पद्यते। तत्र का नाम योग्यानुपलधिः। परिभाषाकारानुसारं **'तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित प्रतियोगिकत्वम् अनुपलब्धेः योग्यता'**[3] अर्थात् यदनुपलब्धिविषये **'अमुकपदार्थः यदि अत्र स्यात् तर्हि उपलभ्येत परन्तु नास्ति'** इति कथितुं शक्यते तदनुपलब्धिरेव योग्यानुपलब्धिः। यथा सप्रकाशस्थले यदि घटः स्यात् तर्हि तस्य उपलब्धिरपि स्यात् किन्तु घटो नास्ति अतः तस्योपलब्धिरपि नास्ति। तद् घटाभावरूपज्ञानमेव अनुपलब्धिप्रमाऽस्ति। तस्मात् प्रकाशयुक्तभूतले घटस्य यदनुपलब्धिः सैव योग्यानुपलब्धिः। अन्धकारेऽवस्थितं घटाभावज्ञानम् अनुपलब्धिप्रमाणेन न ज्ञातव्यम्। प्रकाशेऽवस्थितघटाभावज्ञानाय यद् तर्कापादानं विद्यते अन्धकारे तादृशतर्कापादनं न कर्तुं शक्यते। एवम् अन्धकारे अनुपलब्धिस्तु अस्ति किन्तु सा योग्या नास्ति। अतः तत्रानुपलब्धिप्रमाणं न अपितु अनुमानप्रमाणं प्रवर्तते। तथा च आत्मनि धर्माधर्मादीनामभावः अनुपलब्धिप्रमाणेन न ज्ञायते। धर्मादीनामतीन्द्रियत्वात् तेष्विन्द्रियप्रत्यक्षत्वात् योग्यानुपलब्ध्यभावो वर्तते। अतः धर्मादीनामभावस्य प्रत्यक्षं न भवति।

1 अनुमानजन्यातीन्द्रियाभावानुभव हेतावनुमानादावतिव्याप्तिवारणाय अजन्यान्तं पदम् । -शिखामणिटीका पृ. 344

2 भावानुभवकरणे चक्षुरादावतिव्याप्तिवारणायभावपदम् । – वे. प. अनुपलब्धि परि.,शिखामणिटीका- पृ० 344

3 वे. प. अनुपलब्धि परि.

## इन्द्रियाणाम् अभावाग्राहकत्वविचारः

अत्र नैयायिकानां शङ्केयं वर्तते यत् प्रोक्तरीत्या यत्र अधिकरणेन्द्रियसन्निकर्षो भवति तत्र योऽभावः दृश्यते स एव अनुपलब्धिप्रमाणगम्य इति वेदान्तमतम्। यदि वेदान्तिनः तत्र इन्द्रियाणां उपस्थितिं स्वीकुर्वन्ति तर्हि अभावाकारवृत्तिज्ञानेऽपि इन्द्रियाणि एव करणरूपेण स्वीकुर्यात्। इन्द्रियसत्त्वे अभावप्रत्यक्षज्ञानम्, तदसत्त्वे तदभावः इति अन्वयव्यतिरेकानुविधानात् इन्द्रियमेव अभावज्ञाने करणम्। तर्हि अभावस्य कल्पनत्वं किमर्थं मन्यते। तत्र समाधानं दीयते - वस्तुतः इन्द्रियसम्बन्धः अधिकरणेन सहैव भवति न तु तत्रोपस्थिताभावेन।[1] नैयायिकाभिमतसंयुक्तविशेषणसन्निकर्षस्वीकारे तु पृथिवीपरमाणुषु जलत्वाभावस्यापि प्रत्यक्षत्वापत्तिः स्यात्। अतः इन्द्रियेषु अभावप्रमायाः कारणत्वमेव न विद्यते करणत्वं तु दूरमेव। अतः अनुपलब्धिरेव करणम्।

## अभावज्ञाने प्रत्यक्षगम्यत्वविचारः

अभावे प्रत्यक्षप्रमाणगम्यत्वमस्ति इत्युक्ते नैयायिकाः वदन्ति - **'भूतले घटो नास्ति'** इति ज्ञाने भूतलांशे प्रत्यक्षत्वं वर्तते इति सर्वजनानुभवसिद्धः। अत एव तत्र अन्तःकरण-वृत्तिबहिर्निर्गमनत्वात् भूतलावच्छिन्नचैतन्येऽपि प्रमातृ-अभिन्नत्वेन प्रत्यक्षत्वं जायते। एवञ्च भूतलेऽवस्थितघटाभावावच्छिन्नचैतन्येऽपि प्रमातृ-अभिन्नत्वेन घटाभावांशेऽपि प्रत्यक्षप्रमाणत्वं वेदान्तिभिः स्वीकुर्यात्। तर्हि अनुपलब्धिप्रमाणगम्यत्वं किमर्थं तत्र मन्यते इति शंका। समाधानरूपेण वेदान्तिनः वदन्ति - प्रत्यक्षज्ञानं प्रत्यक्षप्रमाणेन जायते इति न कोऽपि नियमः।[2] यद्यपि अस्मिन् मतेऽपि घटाभावज्ञानांशे प्रत्यक्षत्वं स्वीक्रियते तथापि इन्द्रियसन्निकर्षाभावात् घटाभावज्ञानं प्रति प्रत्यक्षप्रमाणं तु कारणं न। यथा 'दशमस्त्वमसि' इति वाक्यजन्यज्ञानं तु प्रत्यक्षं किन्तु तत्प्रतिकारणं तु प्रत्यक्षप्रमाणं न भवति अपितु शब्दप्रमाणमेव तत्र करणम्।[3] अत एव अभावज्ञानस्य प्रत्यक्षत्वातपि करणं तु अनुपलब्धिप्रमाणम् इति सिद्धम्।

तत्र नैयायिकाः वदन्ति - अनुपलब्धिप्रमाणजन्याभावप्रतीतिज्ञानं यदि प्रत्यक्षं तर्हि 'घटवत्-भूतले यः घटाभावरूपभ्रमो जायते स भ्रमोऽपि प्रत्यक्षः स्यात्। तत्र भ्रमस्य विषयः अनिवर्चनीयो भवति इत्युक्ते भ्रमविषयभूतलघटाभावोऽपि अनिवर्चनीयोऽस्ति इति अभ्युपगम्येत। तस्मात् अनिवर्चनीयघटाभावस्योपादानकारणं मायाऽस्ति न वा। यद्यस्तीति चेत् भावरूपमायया अभावरूपकार्योत्पत्तिः कथं भवितुमर्हति। नास्तीति चेत् 'मायायाः

1 इन्द्रियस्य चाभावेन समं सन्निकर्षाभावेनाभावग्रहाहेतुत्वात् । - वे० प० अनुपलब्धि परि०

2 न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति । - वे. प. अनुप. परि.

3 दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्न-प्रमाणत्वाभ्युपगमात् - वे. प. अनुप. परि.

सकलकार्योपादानत्वानुपपत्तिः स्यात्। तत्र समाधानरूपेण परिभाषाकारैरुच्यते - घटाभावभ्रमे यः घटाभावः दृश्यते तत्तु तत्कालोत्पन्नानिर्वचनीयघटाभावो न मन्यते अपितु भूतले पूर्वतः विद्यमानस्य व्यवहारिकघटाभावस्य आरोपणं भूतले भवति। स आरोपितघटाभाव एव भ्रमविषय इति मन्यते। अत्र वेदान्तिनः अन्यथाख्यातिं स्वीकुर्वन्ति। अन्यत्र स्थितस्य वस्तुनः अन्यत्र आरोपणमेवान्यथाख्यातिरस्ति। अत एव अत्र भूतलरूपेऽवस्थितघटाभावस्य भूतले आरोपात् अन्यथाख्यातिस्वीकारे न कोऽपि दोषः।[1] अपि च घटरूपप्रतियोगियुक्तभूतले यः घटाभावरूपभ्रमो जायते तत्तु अनिवर्चनीय एव अस्मिन् मते। तस्य भ्रमात्मकघटाभावस्योपादानकारणं माया एवास्ति। यतो हि कार्यकारणयोः अत्यन्तसादृश्यं भवति इति न कोऽपि नियमः यथा तन्तुपटयोः कारणकार्यभावत्वादपि तन्तुत्वेन पटत्वेन च सदृशं वैलक्षण्यं दृश्यते। अतः भावरूपमायया अभावरूपभ्रमः न उत्पद्यते इति कथितुं न शक्यते। तन्तुपटयोः सदृशं किञ्चित् साजात्यं तु मायायां मायाजनितानिर्वचनीयघटाभावे च मिथ्यात्वरूपेण विद्यमानमेवास्ति। अपि च कार्यकारणयोः वैजात्यमपि भवति तर्हि अस्य जगतः उपादानकारणं ब्रह्म स्यादिति शंका न कर्तव्या। यतोहि प्रपञ्चाधिष्ठानरूपे विवर्तोपादानरूपब्रह्म अस्माभिः स्वीक्रियते। निरवयवब्रह्मणि विकारासम्भवात् तद् ब्रह्म जगतः परिणामोपादानं न भवितुमर्हति। अतः परिणामोपादानकारणं मायाऽस्ति तथा विवर्तोपादानकारणं ब्रह्म अस्ति इति भावः।

सिद्धान्तबिन्दुग्रन्थानुसारः **'अभावज्ञानहेतुः प्रतियोगिज्ञानैव कारणत्वंरूपेण स्वीकर्तव्यम्'**।[2] अर्थात् यत्र अभावस्य व्यवहारः क्रियते तत्र प्रतियोगिज्ञानम् अपेक्षते। भूतले घटो नास्ति इति ज्ञाने यदि घटज्ञानं न स्यात् तर्हि घटाभावस्य व्यवहारोऽपि न कर्तुं शक्यते। क्वचित् ज्ञातस्यैव एव क्वचितनिषेधः भवति इति नियमः।[3] अभावधियां य प्रतियोगी तस्य ज्ञानमात्रस्यावश्यकता भवति न तु तस्य प्रतियोगिनः सत्वस्य। अनिर्वचनीयपदार्थरूपेणापि तस्मिन् प्रतियोगित्वव्यवहारः कर्तुं शक्यते यथा **'नेदं रजतम्'** अत्र रजताभावज्ञानाय प्रतियोगित्वेन रजतस्यावश्यकता न तु स्वरूपेण। तत्र एका शंका अभ्युपगम्यते – 'शुक्तिरजतस्थले रजतं सत् नास्ति, 'नेदं रजतमि'ति प्रतीत्या तस्य निषेधत्वात्। तद् रजतं भ्रान्तिकाले **'इदं रजतमि'त्युक्ते सद्रूपेण प्रतीतित्वात् असदपि नास्ति। अतः नेदं रजतम्'** इत्यत्र प्रतियोगिकं रजतम् अनिर्वचनीयो भवति। किन्तु प्रत्यक्षादिप्रमाणैः द्वैतकारणरूपजगत्सत्ता तु बोधिता तर्हि तस्य मिथ्यात्वं अनिर्वचनीयत्वं वा कथं स्यात्। यद्वस्तु प्रमाणसिद्धं तद्वस्तु

1 घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यत इत्यन्यथाख्यातिरेव । आरोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातिरेव व्यवस्थापनात् । - वे.प. अनुप. परि.

2 प्रतियोगिज्ञानस्यैव लाघवेनाभावबुद्धौ कारणत्वात् । - सि. बि. दशमश्लोकव्याख्या

3 सि. बि. बिन्दुप्रपातटीका, पृ०- 151

मिथ्या भवितुं नार्हति इति नियमात्। तत्र समाधानं दीयते - जगतः व्यवहारिकसत्ता एव प्रमाणैः बोध्यते पारमार्थिकत्वेन तु सा अनिर्वचनीयास्ति। तस्मात् द्वैताभावप्रतियोगिद्वैतस्यापि अनिर्वचनीयत्वाङ्गीकारः कर्तव्यः।[1] अत एव प्रत्यक्षादिप्रमाणवेद्यद्वैतरूपप्रतियोगिज्ञानमेव द्वैताभावबुद्धौ कारणं स्वीकृतम्।[2]

## अभावज्ञाने चक्षुरादीन्द्रियव्यापारस्य विचारः

समान्यतः सर्वस्थलेषु अधिकरणेन्द्रियसन्निकर्षः स्वीकृतो न तु अभावज्ञानेन्द्रियसन्निकर्षः। किन्तु सिद्धान्तबिन्दौ तु अभावज्ञाने चक्षुरादीन्द्रियव्यापारः स्वीकृतः। एवं अधिष्ठानेन्द्रियसन्निकर्षः अनिवार्यतया तत्र न स्वीकृतः। अयमाशयः - वस्तुतः घटादिवस्तुज्ञानाभाव एव अभावज्ञानं प्रति करणं भवति। किन्तु कस्यचित् वस्तुनः ज्ञानस्याभावः तदैव कथितुं शक्यते यदि तद्वस्तुनः ज्ञानं वर्तते नान्यथा। यथा घटो न ज्ञातं तर्हि घटाभावोऽपि ज्ञातुं न शक्यते। घटाभावप्रतियोगिघटज्ञानाय तु चक्षुरिन्द्रियव्यापारः अपेक्षितः इति तु अनुभवसिद्धः। अतः इत्थं वक्तुं शक्यते यत् अभावज्ञानेऽपि चक्षुरादीन्द्रियव्यापारः कारणं भवति। सिद्धान्तबिन्दुग्रन्थस्य बिन्दुप्रपातटीकायामपि पृथिव्यादीनां तत्त्वानाम् अभावग्रहणार्थं चक्षुव्यापार एव स्वीकृतः।[3] तथा च चाक्षुषव्यापरोत्पन्नेन पृथिव्याद्यभावेन अतीन्द्रियाकाशरूपाधिकरणस्य भानमपि भवति। यतो हि पृथिव्याद्यभावः आकाशश्चेति द्वयोः समनियतत्वं वर्तते। अतः यत्र पृथिव्याद्यभावग्रहणं तत्र आकाशः यत्र च आकाशः तत्र पृथिव्याद्यभावः वर्तते। पृथिव्याद्यभावग्रहणादेव अधिष्ठानरूपाकाशो गृह्यते।[4] एवं सिद्धान्तबिन्दुकारैः अभावज्ञाने चाक्षुषादिव्यापारः तदभावज्ञानेन च अतीन्द्रियाधिष्ठानस्य सत्तायाः भानमिति स्वीकृतम्।

## अभावभेदः

वेदान्तमते अनुपलब्धिप्रमाणेन ज्ञातव्य अभावविषयकज्ञानस्य विषयः अभावः चतुर्विधः अस्ति। तथाहि प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावश्च।[5] देशकालपरिच्छिन्नघटपटादिषु चतुर्विधाभावः वर्तते।[6] वेदान्तपरिभाषाग्रन्थे अभावस्य चतुर्णां

1 द्वैतस्यानिर्वचनीयत्वाङ्गीकारेण प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। - सि. बि. दशमश्लोकव्याख्या
2 ज्ञानस्यैव कारणात् द्वैतस्य प्रत्यक्षादिवेद्यत्वाच्च निषेधोपपत्तिरिति योजना सि. बि. न्यायरत्नावली पृ. 457
3 आकाशप्रदेशे यः पृथिव्यादीनामभावस्तादृशाभावग्रहणार्थं हि चक्षुर्व्याप्रियते। - सि. बि. बिन्दुप्रपातटीका पृ०-22
4 तत्र पृथिव्याद्यभावग्रहणपूर्वकमेवाकाशग्रहणम् । – सि. बि. बिन्दुप्रपातटीका - पृ०- 23
5 स अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति । -वे. प. अनुप. परि.
6 देशकालापरिन्छिन्नत्वात्-देशकालवृत्त्यभाव प्रतियोगिभिन्नत्वग्रहात्, तत्परिच्छिन्नानां-देशकालवृत्त्यभावप्रतियोगिनां तादृशावच्छेदेनेति । - सि. बि. न्यायरत्नावली पृ०-123

भेदानां लक्षणसमन्वितवर्णनं प्राप्यते। सिद्धान्तबिन्दुग्रन्थे चतुर्भेदानां वर्णनम् तु आत्मनि तेषां निषेधार्थं प्राप्यते।

**प्रागभावः -** परिभाषाग्रन्थे कारणे कार्यस्योत्पत्तिपूर्वं विद्यमान: कार्यस्याभाव एव प्रागभाव इत्युच्यते यथा मृत्पिण्डे घटस्योपत्तिपूर्वं घटस्य यः अभावः स एव प्रागभावः। प्रागभाव: भविष्यतीति प्रतीति विषयो भवति यथा मृत्पिण्डे कपाले वा घटो भविष्यति तन्तौ च पटो भविष्यतीति भावः।

सिद्धान्तबिन्दौ आत्मनः प्रागभावस्य निषेधार्थं प्रागभावस्य वर्णनं कृतम्। ग्रन्थानुसारः देहादिषु चतुर्विधोऽभावः सम्भवति इत्युक्ते देहादिषु प्रागभावप्रतियोगित्वं भवति। कालतः परिच्छिन्नवस्तुन एव प्रागभावः सम्भवति देशकालपरिच्छिन्नाऽऽत्मनः प्रागभावः भवितुं नार्हति।[1] आत्मनस्तु सद्रूपेण सर्वदा भानं भवति। अपि च प्रमेयसिद्धिः प्रमाणाधीना भवतीति न्यायेन प्रागभावसाधकप्रमाणेन तस्य अभावस्य सिद्धिः भवति। तत्र आत्मभिन्नोऽनात्मा तु जडत्वादात्मनः प्रागभावस्य ग्राहकः भवितुं नार्हति। आत्माऽपि स्वप्रागभावकाले विद्यमानो न। आत्मन: प्रागभावस्वीकारे तु उत्पत्त्यनन्तरं सुख-दुःखानुभवः अर्थात् अकृतफलागमः स्यात्। अत एव देशकालपरिच्छिन्नघटपटदेहादीनामेव प्रागभाव: सम्भवति न तु देशकालापरिच्छिन्नाऽऽत्मन:।

**प्रध्वंसाभावः -** अयमभावः घटो नष्ट इति प्रतीतिविषयोऽस्ति। घटोपरि मुद्गरपातेन घटस्य यः अभावः स एव प्रध्वंसाभावः। अतः जन्यस्य कार्यस्य विनाशे सति उत्पन्नो यः अभावः स प्रध्वंसाभाव इत्युच्यते।[2] परिभाषाकारैः प्रध्वंसाभावस्य इदं लक्षणं कृतम् - तत्रैव घटस्य मुद्गरपातानन्तरं योऽभावः स प्रध्वसाभावः इति।[3] वेदान्तमते न्यायसदृशं सादिरनन्तरूपः प्रध्वंसाभावः न स्वीक्रियते अपितु ध्वंसाभावस्य नाशो भवतीति मन्यते। तत्र परिभाषाकारः वदति- घटध्वंसाभावस्य अधिकरणं घटस्य समवायिकारणं कपाल एवास्ति। अस्मिन् कपाले एव घटध्वंसाभावः वर्तते। अत एव कपालविनष्टे सति घटध्वंसस्य विनाशोऽपि जायते।

घटध्वंसस्य ध्वंसस्वीकारे तु घटध्वंसाभावस्य प्रतियोगी घटध्वंस एव स्यादिति न्यायमतं निराकृत्य परिभाषाकारः वदति - घटध्वंसस्य अभावस्य प्रतियोगी अपि घट एव। तथाहि घटध्वंसविनष्टे सति पूर्वध्वस्तघटस्य पुनरुत्थानं न भवितुमर्हति। अतः घट एव प्रतियोगी अन्यथास्वीकारे तु प्रागभावध्वंसोत्पन्नघटध्वंसात् प्रागभागवस्य पुनरोत्पत्तेः

1 कार्यसमवायिकालान्यावृत्तिप्रतियोग्यजनको योऽभाव:, स प्रध्वंस। स च घटो विनष्ट इत्यादि प्रीतिविषय इति भाव: । - वे० प० अनुप० परि०
2 ध्वंसस्यापि स्वाधिकरणकपालनाशे नाश एव । - शिखामणि टीका- पृ.- 353
3 वे० प० अनुप० परि०

आपत्तिरिति।[1] तत्र पुनः एका शङ्का उत्थिता - घटध्वंसाभावधिकरणकपालस्तु अनित्यः। अतः तन्निष्ठध्वंसाभावोऽपि अनित्य एव। किन्तु यत्राधिकरणं नित्यं भवति तत्र ध्वंसाभावस्य नाशः कथं स्यात्। तत्र परिभाषाकारः समाधत्ते – यस्य अधिकरणस्य नित्यत्वं कथ्यते तदधिकरणं चैतन्यभिन्नं विवक्षितं चैतन्यं वा विवक्षितं । प्रथमः पक्षस्तु न समीचीनः चैतन्यभिन्नस्य सर्वजगतः अनित्यत्वात्। द्वितीयपक्षे चैतन्ये ध्वसांधिकरणत्वस्वीकारे सत्यपि ध्वंसस्य नित्यत्वापत्तिः न । ब्रह्मचैतन्ये न किमपि वस्तु पारमार्थिकमस्ति। अतः तस्य ध्वंसोऽपि पारमार्थिकत्वेन न भवितुं शक्यते। तत्रोच्यते परिभाषाग्रन्थे **'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः'।**[2] अर्थात् कल्पितवस्तुनः ध्वंसोऽपि कल्पित एव भवति। अतः कल्पितध्वंसनाशे सति अधिकरणमेव अवशिष्यते। चैतन्यात्मरूपनित्याधिष्ठाने आरोपितप्रतियोगिसत्ता तदधिष्ठानात् न भिन्ना अपितु अधिष्ठानस्वरूपमात्रमेव।

सिद्धान्तबिन्दौ प्रागभाववत् आत्मनः प्रध्वंसाभावस्यापि निषेधः स्वीकृतः। तत्र देहादीनां ध्वंसाभाव अभ्युपगम्यते। देहविनाशे सति तस्य ध्वंसाभावः जायते। आत्मा तु देशकालापरिच्छिन्नत्वात् न ध्वंसाभावस्य प्रतियोगी। अन्यथा आत्मनः प्रध्वसाभावस्वीकारे तु फलोपभोगं विना एव आत्माकृतकर्मणां क्षय इत्यापत्तिः स्यात्।

**अत्यन्ताभावः -** यत्र अनुयोगी सप्तम्यन्तः एवं प्रतियोगी प्रथमान्तो भवति तत्र 'न'पदेन अत्यन्ताभावः ज्ञायते यथा- भूतले न घटः। परिभाषाकारैः अत्यन्ताभावस्य **'यत्राधिकरणे यस्य कालत्रयेऽप्यभावः'**[3] इति लक्षणं कृतम्। उदाहरणार्थम् – वायौ रूपस्यात्यन्ताभावः। वायौ रूपं न कदाचित् भूतम्, नास्ति न च कदापि भविष्यति इत्युक्ते वायौ रूपस्यात्यन्ताभावः बोधव्यः। अतः वस्तुनः त्रैकालिकाभाव एव अत्यन्ताभावः इति वक्तुं शक्यते। नैयायिकमते अत्यन्ताभावः नित्योऽस्ति परन्तु वेदान्तमते रूपस्यात्य न्ताभावस्याधिकरणवायोरपि महाप्रलयकाले नाशो भवति एव। अतः अधिकरणनाशात् तन्निष्ठात्यन्ताभावस्यापि नाशो गृहीतव्यः।

सिद्धान्तबिन्दौ अत्यन्ताभावः इत्थं निरूपितम् - देशपरिच्छिन्नवस्तुन एव अत्यन्ताभावो भवति यथा- **'भूतले घटो नास्ति'**। अस्यां प्रतीत्यां भूतले घटस्य त्रैकालिकाभावो अर्थात् अत्यन्ताभावोऽस्ति। देशकालापरिच्छिन्नात्मा तु सत्स्वरूपोऽस्ति। **'घटोऽस्ति', 'पटोऽस्ति'** इत्युक्ते सद्रूपः स आत्मा सर्वत्रानुगतो भवति। अत एव सद्रूपात्मनः अत्यन्ताभावः न कुत्रापि सम्भवति।[4]

---

1 न चैवं घटोन्मज्जनापत्तिः घटध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात् । अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः॥ - वे. परि. अनुप. परि.

2 वे. परि. अनुप. परि.

3 वे. परि. अनुप. परि.

4 सद्रूपस्य आत्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसम्भवः। - सि० बिन्दु-प्रथमश्लोकव्याख्या ।

**अन्योन्याभावः -** परिभाषाग्रन्थे उक्तम् - इदमिदं नेति प्रतीतिविषयोऽन्योऽन्याभावः। यत्र अनुयोगी प्रतियोगी च प्रथमान्तोऽस्ति तत्र नकारस्यार्थः अन्योन्याभावो भवति यथा इदं रजतं न। न्यायशास्त्रे अभ्युपगम्यते - **'अन्योऽन्याभावस्तु तादात्म्यप्रतियोगिकोऽभाव:। घटो पटो न भवतीति'**।[1] अधिकरणस्य सादित्वेन अनादित्वेन च अन्योन्याभावोऽपि सादिको अनादिको वा भवति। घटो न पटः अत्र घटपटयोः अन्योऽन्याभावः सादिरस्ति पटाधिकरणस्य सादित्वात्। किन्तु ब्रह्म न जीव इत्यत्र ब्रह्मरूपाधिकरणस्यानादित्वात् ब्रह्मजीवयोः अन्योन्याभावोऽपि अनादि एव। सादि-अनादिरूपद्विविधान्योऽन्याभावः ध्वंसप्रतियोगी अस्ति न तु अनन्तः। मूलाविद्यानिवृत्ते जाते अन्योऽन्याभावभेदस्यापि निवृत्तिर्भवति। सिद्धान्तबिन्दौ अन्योऽन्याभाव एव तादात्म्याभावोऽस्ति। अन्योन्याभाव: भेदनाम्नाऽपि ज्ञायते।[2] यथा घटो पटो न। अत्र घटः तस्याधिकरणभूतपटतादात्म्येन न सिद्ध्यति। घटस्य सत्ता तु पटसत्तायाः पृथगस्ति अतः तत्र घटपटयो: भेदोऽनुभूयते। किन्तु प्रातीतिकभेदस्तु न वस्तुतः अन्योऽन्याभावः यथा शुक्तितादात्म्येन प्रतीयमानरजते नेयं शुक्तिरिति निषेधः वस्तुतः न भवितुमर्हति। एवञ्च द्वैतप्रपञ्चस्यापि शुक्तिरजतादिवत् तस्याधिष्ठानभूतब्रह्मतादात्म्येन मिथ्यात्वं सिद्धत्वात् भेदानुपपत्तिः जायते।[3] द्वैतप्रपञ्चः अर्थात् अविद्याकार्यरूपसर्वेऽपि पदार्थाः आत्मनि आरोपिताः। आरोपितपदार्थानां सिद्धिः अधिष्ठानभूतात्मतादात्म्येनैव भवितुं शक्यते। तर्हि आत्मनः तादात्म्येन सिद्धपदार्थानां तादात्म्यप्रतियोगिकान्योऽन्याभावः कथं स्यात्। अतः न भवति।

**अन्योन्याभावभेद: -** द्विविधः अन्योन्याभाव: सोपाधिक: निरुपाधिकश्च। परिभाषाग्रन्थे यस्य भेदस्य सत्ता उपाधिसत्ताव्याप्य भवति तस्य भेदस्य एव सोपाधिकत्वम् स्वीक्रियते[4] यथा आकाशस्तु वस्तुतः एकैव न तत्र भेदः तथापि आकाशस्य घटमठादि-उपाधिसत्ताव्याप्यत्वेन घटाकाश-मठाकाशेत्यादि भेदः अनुभूयते। घटमठाद्युपाधिभेदात् एव घटाकाशो न मठाकाश इति आकाशभेदः प्रतीयते। अयं भेद एव सोपाधिकान्योन्याभावः अस्ति। एवमेव अखण्डैकरसब्रह्मणः भिन्न-भिन्नान्तःकरणरूपोपाधिभेदात् नानाजीवरूपेण भेदः व्यवह्रियते।[5] अन्तःकरणोपाधिभेदात् एव चैतन्यं देवदत्त-धनञ्जयादिरूपेण ज्ञायते। उपाधिनामनुपस्थितौ सत्यां शुद्धचैतन्यरूपब्रह्मैव अवशिष्यते। सिद्धान्तबिन्दू परिरचितान्यायरत्नावलीटीकायां सोपाधिकान्योऽन्याभावविषये कथ्यते - विशिष्टसत्ता सत्तेत्यादावपि विशिष्टसत्तात्वस्य अन्योन्याभावे शुद्धचैतन्यानुयोगिकत्वेन व्यावहारिकेण

1 तर्कभाषा - प्रमेयनिरूपणम् ।
2 तादात्म्येनाभावस्तादात्म्याभावः भेद (अन्योन्याभावः) इति । - सि. बि. न्यायरत्नावली- पृ.-128
3 द्वैतस्य मिथ्यात्वेनाधिष्ठानसत्तादात्म्यापन्नतयैव सिद्धत्वात् शुक्तिरजतादिवत्ध्यस्तस्य तत्तादात्म्याभावानुपपत्तेः । - सि. बि. प्रथमश्लोकव्याख्या
4 तत्रोपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वं । - वे० प० अनुप० परि०
5 यथा वा एकस्यैव ब्रह्मणोऽन्तःकरणभेदाद् भेदः । - वे० प० अनुप० परि०

विशिष्टसत्ताप्रतियोगिकत्वं प्रातीतिकं कल्पितम्।[1] अर्थात् शुद्धचैतन्यानुयोगिकतादात्म्येन सिद्धयोः विशिष्टसत्ताप्रतियोगिक-धनञ्जयदेवदत्तयोः भेदः प्रातीतिकः कल्पितो वा न तु वस्तुतः। अतः यस्मिन् अभावे शुद्धचैतन्यानुयोगित्वेन निरूप्यते तत्र न कोऽपि भेदः भवितुमर्हति।

**निरुपाधिकान्योन्याभावः-** यस्मिन् भेदे उपाधिसत्ता न अपेक्षिता स एव निरुपाधिक-भेदः कथ्यते यथा घटो स्वभावतः पटतः भिन्नोऽस्ति। अत एव अत्र उपाधिसत्ताव्याप्य-सत्ताकत्वाभावात् निरुपाधिकभेदो विद्यते। अतः यत्र स्वभावत: भेदः वर्तते तत्र निरुपाधिकभेद इत्युच्यते यथा घटमठयोर्भेदः। यद्यपि परिभाषाग्रन्थे अन्योन्याभावे शुद्धब्रह्मानुयोगित्वेन प्रपञ्चस्य भेद: स्वीकृतस्तथापि अन्ततः ग्रन्थे सिद्धान्तबिन्दुवत् द्वैतप्रपञ्चस्य ब्रह्मणि कल्पितत्वाङ्गीकारात् न वस्तुत: भेद इत्येव स्वीकृतः।

उपर्युक्तालोच्यग्रन्थद्वयस्य तुलनात्मकमध्ययेन ज्ञायते यत् यद्यपि श्रीमधुसूदनाचार्यः धर्मराजाध्वरीन्द्राचार्यश्चेति ग्रन्थकारद्वयस्य अनुपलब्धिप्रमाणस्य तस्य च भेदानां स्वरूपविवेचनप्रक्रियायां भिन्नत्वं प्राप्यते तथापि अस्मात् वैलक्षण्यात् अद्वैतसिद्धान्तानां न काऽपि हानिः। उभयत्रैव अनुपलब्धिप्रमाणं स्वतन्त्रप्रमाणमस्ति एवं प्राग्ध्वंसान्योन्याऽत्यन्ता भावाख्यानां चतुर्विधाभावानां प्रतीतिरपि अनुपलब्धिप्रमाणेनैव भवति।

## सन्दर्भ-ग्रन्थ-सूची

तत्त्वप्रदीपिका - चित्सुखाचार्यः, चौखम्बासंस्कृतविद्याभवनम्, वाराणसी, 1987

तन्त्रवार्तिकम् – कुमारिलभट्टस्वामी, सं.- पं. गङ्गाधरशास्त्री, विद्याविलासप्रेस, बनारस, 1903

तर्कसंग्रहः – अन्नमभट्ट:, आचार्यश्रीनिवासशर्मा, भारतीयविद्या संस्थान, वाराणसी, प्रथमसंस्करणम्, 2010

पञ्चपादिकाविवरणम् - प्रकाशात्मयति: , सम्पादकः– श्रीरामशास्त्रिः, विजयनगरसीरिज, बनारस

बृहदारण्यकभाष्यवार्तिकम् - सुरेश्वराचार्यकृतम् , श्रीदक्षिणामूर्ति मठ प्रकाशनम् , काशी

भामती (शारीरकभाष्यव्याख्या) - वाचस्पतिमिश्रः, सम्पादकः - अनन्तकृष्णशास्त्री, निर्णयसागर प्रेस, बम्बई,1938

मानमेयोदयः – नारायणभट्ट-नारायणपण्डितप्रणीतः, सम्पादकः - गणपति शास्त्रिः, राजकीयमुद्रणयन्त्रालयः , 1912

वेदान्तपरिभाषा- पं.स्वामीगोविन्दसिंहसाधुः, प्रकाशकः - क्षेमराजकृष्णदासः, श्रीवेङ्कटेश्वरमुद्रालयः, मुम्बई, सं.-1901

1 सि. बि. न्यायरत्नावलीटीका पृ० – 129

वेदान्तपरिभाषा- के.साम्बशिवशास्त्री, राजकीयमुद्रणयन्त्रालयः, 1928

वेदान्तपरिभाषा-डॉ.श्रीगजाननशास्त्रीमुसलगांवकरः,सम्पादकः-श्रीरामशास्त्रीमुसलगांवकरः, चौखम्बा विद्याभवन, वाराणसी, 1983

वेदान्तपरिभाषा- समणिप्रभा शिखामणिसहिता, सम्पादकः - प्रो.पारसनाथद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी,1984

वेदान्तपरिभाषा - श्रीशिवदत्तशास्त्रीविरचिताऽर्थदीपिकाटीकासहित , सम्पादकः - त्र्यम्बकरामशास्त्री , चौखम्बा संस्कृतसीरिज आफिस, वाराणसी, 2019

वेदान्तसारः – सदानन्दयोगीन्द्रः, प्रो.राममूर्तिशर्मा, ईस्टर्न बुक लिंकर्स, तृतीयसंस्करण,1989

श्लोकवार्तिकम्– कुमारिलभट्टप्रणीतः, रामशास्त्रीतैलङ्गः, चौखम्बासंस्कृतबुक, वाराणसी, 1898

सिद्धान्तबिन्दुः - आचार्यमधुसूदनसरस्वती, सम्पादकः - अभ्यंकरोपाह्ववासुदेवशास्त्रिकृत-बिन्दुप्रपातटीकासहित, भण्डारकरप्राच्यविद्यासंशोधनमन्दिर, 1928

सिद्धान्तबिन्दुः - सम्पादकः - श्रीकृष्णपन्तः, गीताप्रेस गोरखपुर, 1932

सिद्धान्तबिन्दुः - सम्पादकः - त्र्यम्बकरामशास्त्री, प्रकाशक - जयकृष्णदास-हरिदासगुप्तः, चौखम्बा संस्कृतसीरिज, विद्याविलासप्रेस, बनारस, 1985

सिद्धान्तबिन्दुः- श्रीगौड़ब्रह्मानन्दकृतन्यायरत्नावली- श्रीनारायणतीर्थकृत लघुव्याख्यासहिता, चौखम्बासंस्कृतसीरिज, विद्याविलासप्रेस, बनारस, अष्टम पुष्पम्, 1985

संक्षेपशारीरकम् - सर्वज्ञात्ममुनिः, हरिनारायण आप्टे, आनन्दाश्रमः

* * *

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# प्रश्नशास्त्रफलविमर्शः

- प्रिया शर्मा*

गणितसंहिताहोरास्कन्धत्रयात्मकं ज्योतिषमहाशास्त्रमिदं जातक-गोल-निमित्त-प्रश्न-मुहूर्त-गणितेत्येतेषु षडङ्गेषु विभक्तमस्ति।[1] षडङ्गेषु गोलगणितयोन्तर्भावो गणितस्कन्धे, निमित्तशास्त्रस्य संहितास्कन्धे, जातकप्रश्नमुहूर्तशास्त्राणाञ्च होरास्कन्धेन्तर्भावो भवति।[2] यत्र प्रश्नलग्नमाश्रित्य शुभाशुभफलं क्रियते तत् प्रश्नशास्त्रम्। इदं तत्कालफलादेशात्मकं शास्त्रमस्ति। यत्र प्रश्नकर्तृणामुच्चारिताक्षरोपरि फलस्य प्रतिपादनं क्रियते। अस्मिन् शास्त्रे त्रयः सिद्धान्ताः प्रथिताः सन्ति-

१.प्रश्नाक्षर-सिद्धान्तः

२.प्रश्नलग्न-सिद्धान्तः

३.स्वरविज्ञान-सिद्धान्तश्चेति।

अस्मिन् शास्त्रे चर्चा-चेष्टा स्वरादिमाध्यमेन मनोगतभावानां वैज्ञानिकदृष्ट्या विश्लेषणं कृत्वा फलादेशः क्रियते। वर्तमानकाले कस्य पूर्वजन्मकृतशुभाशुभकर्मणः, अस्मिन् जन्मनि कृतक्रियमाणकर्मणश्च परिपाको भवति एतत्सर्वं प्रश्नशास्त्रेण विज्ञायते।[3] प्रश्नवाक्यस्याक्षरेण, प्रश्नलग्नेन एवं बाह्यवातावरणस्य शकुनेन सावधानीपूर्वकं शुभाशुभयोः फलयोर्ज्ञानं कृत्वा दैवज्ञैः फलादेशो विधीयते।

---

***शोधच्छात्रा, ज्योतिषविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली-१६**

1 स्कन्धत्रयात्मकं ज्योतिश्शास्त्रमेतत् षडङ्गवत्।
गणितं संहिता होरा चेति स्कन्धत्रयं मतम्॥
जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि।
अभिदधतीह षडङ्गान्याचार्या ज्योतिषे महाशास्त्रे॥ –प्रश्नमार्गः,प्र.अ,श्लो.सं.५-६

2 गोलो गणितञ्चेति द्वितयं खलु गणितसंहिते स्कन्धे।
होरासंहितयोरपि निमित्तमन्यत्रयञ्च होराख्ये॥ –प्रश्नमार्गः,प्र.अ,श्लो.सं-७

3 कस्य पक्तिरिति ज्ञातुमिदानीं पूर्वकर्मणाम्।
इहार्जितञ्च विज्ञातुं कर्म प्रश्नो विधीयते॥ –प्रश्नमार्गः,द्वि.अ,श्लो सं-४१

सम्पूर्णज्योतिषशास्त्रस्य ज्ञानं विधाय जातकशास्त्रे यथा ग्रहाणां बलाबलविचारपूर्वकं फलादेशविधानं कृतं तथैव प्रश्नशास्त्रेपि फलचिन्तनं कर्त्तव्यम्। पूर्वजन्मनन्यस्मिन् जन्मनि च कृतकर्मणां विभागः कथं कर्त्तव्यमस्य ज्ञानमपि प्रश्नशास्त्रेण क्रियते। यदा जन्मकुण्डलीवशात् जातकफलात् प्रश्नलग्नगतफलं गुणदोषैर्भिन्नं भवति तदास्मिन् जन्मनि कृतशुभाशुभकर्मभिः शुभाशुभं फलं ज्ञातव्यम्।[1] यदा प्रश्नलग्नेन ग्रहराश्यादियोगैः प्रश्नशास्त्रस्य फलं जातकफलेन तुल्यं भवति तदा ज्योतिर्विद्भिः पूर्वजन्मकृतकर्मफलं ज्ञातव्यम्।[2] जातकशास्त्रे जन्मकालवशेन जन्मलग्नं तथा प्रश्नशास्त्रे प्रश्नकालवशेन प्रश्नलग्नं निर्मीयते। अतः प्रश्नशास्त्रे जन्मलग्नवत् प्रश्नलग्नं सङ्कल्प्य जातकशास्त्रे यथा फलादेशः क्रियते तथैव प्रश्नशास्त्रस्य सिद्धान्तानां ज्ञानं विधाय फलादेशस्य विचारो विधीयते।[3]

दैवज्ञेन प्रश्नकाले प्रश्नकालिकसमयः प्रश्नदेशः, स्ववायुर्दशया सूर्यचन्द्रादि-प्रचलितस्वरः, प्रष्टुरङ्गस्पर्शनम्, भूमिचक्रदिक्स्थितारूढराशिः, प्रश्नाक्षराणि, प्रश्नकर्तुः स्थितिः, पृच्छकस्य चेष्टा, प्राश्निकस्य प्रसन्नखिन्नादिमनोदशाभावाः, प्रष्टुरुर्ध्वाधोदृष्टिः, पृच्छकस्य श्वेतरक्तवर्णादिवस्त्राणि, तात्कालिकशकुनानि एतानि मुख्यरूपेण विचारणीयानि सन्ति।[4]

### समयविचारः

यस्मिन् काले पृच्छकेन दैवज्ञस्य समीपे आगत्य प्रश्नस्य पृच्छा क्रियते, तदा तात्कालिकसमयानुसारेण प्रश्नलग्नं विधाय जातकशास्त्रे जन्मङ्गानुसारेण यथा फलादेशः क्रियते तथैव प्रश्नशास्त्रे प्रश्नाङ्गानुसारेण फलादेशो विधीयते।

### प्रश्नदेशविचारः

प्रश्नकर्ता यस्मिन् स्थाने प्रश्नं करोति तत् प्रश्नदेशः कथ्यते। प्रश्नशास्त्रे देशविचारः प्रकारद्वयेन भवति। प्रथमप्रकारेण यथा जन्मसमयानुसारेण जन्मस्थानस्य अक्षांशरेखांशयोराधारेण सूर्योदयस्य जन्मेष्टकालस्य जन्मलग्नस्य च साधनं क्रियते तथैव प्रश्नदेशस्य(स्थानस्य) सूर्योदयप्रश्नेष्टप्रश्नलग्नादिसाधनं विधाय फलादेशो विधीयते। द्वितीय-

1 यदा जातकः प्रश्नो गुणदोषैर्विभिद्यते।
तदा शुभाशुभं विद्यात् कर्मभेदैरिहार्जितैः॥ –प्रश्नमार्गः,द्वि.अ,श्लो.सं.४१
2 यदा जातकः प्रश्नो गुणदोषैर्विभिद्यते।
तदा शुभाशुभं विद्यात् कर्मभेदैरिहार्जितैः॥ –प्रश्नमार्गः,द्वि.अ,श्लो.सं.४३
3 जन्मलग्नतया प्रश्नलग्नं सङ्कल्प्य पण्डितः।
जातके यद्यदुद्दिष्टं तत्तत् प्रश्नेऽपि चिन्तयेत्॥ –प्रश्नमार्गः,द्वि.अ,श्लो,सं.४७
4 दैवज्ञेन समाहितेन समयो देशः स्ववायुर्दशा,
प्रष्टुः स्पर्शनमाश्रितर्क्षहरितौ प्रश्नाक्षराणि स्थितिः।
चेष्टाभावविलोकने च वसनाद्यन्यच्च तत्कालजं
पृच्छायाः समये तदेतदखिलं ज्ञेयं हि वक्तुं फलम्॥ –प्रश्नमार्गः,द्वि.अ,श्लो सं-१२

प्रकारेण प्रश्नदेशस्य शुभाशुभत्वानुसारेण प्रश्नफलस्य शुभाशुभत्वविचारः क्रियते।

## स्ववायुर्दशासूर्यचन्द्रादिप्रचलितस्वरविचारः

दैवज्ञेन प्रभातकाले प्रतिदिनं श्वासेन स्वरपरीक्षणं कर्त्तव्यम्। श्वासस्य इडा-पिंगला-सुषुम्णानाडीस्वराणां गतेः पृथ्वी-जल-अग्नि-वाय्वाकाशतत्वानां सञ्चारश्च ज्ञातव्यः। तात्कालिकस्वरेण प्रश्नकर्तुः शुभाशुभफलं नष्टादिपदार्थानां ज्ञानञ्च कर्त्तव्यम्।[1] इडासंज्ञकवामनाडीस्वरः चन्द्रस्य, पिङ्गलासंज्ञकदक्षिणनाडीस्वरः सूर्यस्य, सुषुम्णासंज्ञकमध्यनाडीस्वरश्च अग्नेः कथितः।[2] यात्राप्रस्थानकाले इडावामस्वरसञ्चारः, गृहवधूनगरादिप्रवेशे पिङ्गलादक्षिणस्वरः, योगाभ्यासप्रक्रियाणां सुषुम्णामध्यस्वरः प्रशस्यते। अन्यकार्येषु सुषुम्णानाडीस्वरः प्रशस्तो न भवति।[3] श्वासस्य प्रमाणेन पृथ्व्यादितत्त्वानां ज्ञानं भवति। पृथ्वीतत्त्वस्य सञ्चारकाले श्वासस्य दैर्ध्यं षोडशाङ्गुलम्, जलतत्त्वस्य द्वादशाङ्गुलम्, अग्नितत्वस्य अष्टाङ्गुलम्, वायुतत्त्वस्य षडङ्गुलम्, आकाशतत्त्वस्य त्र्यङ्गुलं भवति। अनेन प्रकारेण स्वीयश्वासगतिप्रमाणेन पृथ्व्यादितत्त्वानां सञ्चारो ज्ञातव्यः।[4] नष्टादिपदार्थानां ज्ञाने पृथ्व्यादितत्त्वानां विशिष्टं महत्वं वर्तते। नष्टादिपदार्थप्रश्ने भूमितत्त्वस्योदयो नष्टपदार्थो भूमिगर्ते, जलतत्त्वस्योदये जले, वायुतत्त्वस्योदये धूम्रस्थाने, आकाशतत्वस्योदये वृक्षशैलाद्युच्चस्थाने, अग्नितत्वस्योदये भूपृष्ठभागे ज्ञातव्यः।[5] पृथ्वीतत्त्वस्योदये नष्टपदार्थः पूर्वदिशि,जलतत्त्वस्योदये दक्षिणदिशि, अग्नितत्त्वस्योदये पश्चिमदिशि, वायुतत्त्वस्योदये उत्तरदिशि, आकाशतत्त्वस्योदये मध्येऽथवा स्वस्थाने स्थितो भवति।[6]

1 कार्यं श्वासपरीक्षणं प्रतिदिनं बुध्वा प्रभातागमे,
तस्येडादिगतिर्धराप्रभृतिसञ्चारश्च विज्ञायताम्।
तेनात्मीयशुभाशुभं हि सकलं ज्ञेयं पुनः पृछतां
तत्कालात्मसमीरणेन च तथा नष्टादिकं चोच्चयताम्॥ –प्रश्नमार्गः,द्वि.अ,श्लो सं-२८

2 इडा वामा भवेन्नाडी सोमस्यार्कस्य दक्षिणा।
पिङ्गलाख्या सुषुम्नाख्या मध्यमाग्नेरुदीरिता॥ –प्रश्नमार्गः,द्वि.अ,श्लो सं-४०

3 निर्गमे तु शुभदा भवेदिडा पिङ्गला तु शुभदा प्रवेशने।
योगसाधनविधौ तु मध्यमा शस्यते न तु परेषु कर्मसु॥ -प्रश्नमार्गः,द्वि.अ,श्लो सं-४१

4 मेदिन्याः खलु षोडशाङ्गुलमपां दैर्घ्यं दिनेशाङ्गुलं
वह्नेर्दन्तिमिताङ्गुलं मरुत एतद्व्यूनमग्न्यङ्गुलम्।
आकाशस्य च वेद्यमेतदुदितं भूम्यादिभूतात्मकं
स्वीयश्वासगतिप्रमाणमुभयोरेतत्समं घ्राणयोः॥ -प्रश्नमार्गः,द्वि.अ,श्लो सं-३४

5 भूमौ निखातमवनेरुदये जलेपां
वातस्य धूमवति खस्य तथोर्ध्वदेशे।
भूपृष्ठगं हुतभुजः खलु वास्तु नष्टं
ब्रूयात् कृतेह यदि नष्टपदार्थपृच्छा॥ -प्रश्नमार्गः,द्वि.अ,श्लो सं-३८

6 ऐन्द्रायाद्यास्तु दिशो ज्ञेयाः पृथिव्याद्युदयैः क्रमात्।
आकाशोदयतो मध्यं नष्टं तत्रैव वा स्थितम्॥ -प्रश्नमार्गः,द्वि.अ,श्लो सं-५०

## प्रष्टुरङ्गस्पर्शनफलविचारः

प्रश्नकर्तुः वक्षःस्थले स्पर्शे कृते सति क्षिप्रमेवेप्सितवस्तुनो लाभो भवति। कुङ्कुमपुष्पपूगीफलनारिकेलपूर्णपात्रपुस्तकादिमङ्गलवस्तुनः स्पर्शे शीघ्रलाभः, अमङ्गलघृणोत्पादकवस्तुनः स्पर्शेऽमङ्गलं भवति। नाभिनासिकामुखकेशरोमनखदन्तगुह्याङ्गपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीशरीरनवरन्ध्रकरपदतलाङ्गुलीपर्वनिम्नाङ्गस्पर्शे कृतेऽनिष्टं फलं भवति।[1]

## आरूढराशिफलविचारः

जातकशास्त्रे यदारूढलग्नं कथितं तद्भिन्नभूमिचक्रस्थितारुढराशिफलविचारः प्रश्नशास्त्रे कृतः। प्रश्नशास्त्रे आरूढचक्रेऽथवा भूमिचक्रे पूर्वदिशि मेषवृषराशी,अग्निकोणे मिथुनराशिः, दक्षिणदिशि कर्कसिंहराशी, नैऋत्यकोणे कन्याराशिः, पश्चिमदिशि तुलावृश्चिकराशी, वायव्यकोणे धनुराशिः, उत्तरदिशि मकरकुम्भराशी, ईशानकोणे च मीनराशिः स्थितो भवति।[2]

## आरूढचक्रम् (भूमिचक्रम्)

| **ईशानकोणः** | **पूर्वदिक्** | | **आग्नेयकोणः** |
|---|---|---|---|
| मीनराशिः | मेषराशिः | वृषराशिः | मिथुनराशिः |
| कुम्भराशिः | दैवज्ञः | | कर्कराशिः |
| मकरराशिः | | | सिंहराशिः |
| धनुराशिः | वृश्चिकराशिः | तुलाराशिः | कन्याराशिः |
| **वायव्यकोणः** | **पश्चिमदिक्** | | **नैऋत्यकोणः** |

दैवज्ञस्य पार्श्वे समागत्य प्रश्नकर्ता यस्मिन् दिक्स्थितराशौ आरूढो भवति प्रश्नशास्त्रे तद् आरूढराशिः कथ्यते। तदारूढराशेः सम्यग् ज्ञानं कृत्वा तेन प्रश्नफलदिग्विचारः क्रियते।[3] प्रश्नकर्तुः स्थितेरारूढराशेरनिश्चिते स्वर्णपत्रे भूमिचक्रं विलिख्य तस्य विधिवत् पूजनं कृत्वा

1 प्रष्टा वक्षदेशे स्पृशेद्यदि क्षिप्रमीप्सितं लभते।
मङ्गलवस्तूनि च तथा विपरीतं फलममङ्गलस्पर्शे॥
संस्पृशन्नाभिनासास्यकेशरोमनखद्विजान्।
गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः॥ -प्रश्नमार्गः,द्वि.अ,श्लो.सं.६५-६६

2 ऐन्द्रयां मेषवृषावग्निकोणे मिथुनभं स्थितम्।
याम्यां करकटसिंहौ तौ नैर्ऋत्यां दिशि कन्यका॥
वारुण्यां तु तुलाकीटौ वायुकोणे धनुः स्थितिः।
सौम्यां मृगघटौ स्यातामैशान्यां दिशि मीनभम्॥
भूमिचक्रमिति प्रोक्तं विष्वग् दैवविदः स्थितम्।
तत्र यत्र स्थितः प्रष्टा पृच्छत्यारूढभं हि तत्॥ -प्रश्नमार्गः,द्वि.अ.,श्लो सं-७-९

3 आरूढत्वात्पृच्छकेन राशिरारूढ उच्यते।
तस्मिन्सम्यक्परिज्ञाते सर्वं तेनैव चिन्त्यताम्॥ -प्रश्नमार्गः,द्वि.अ.,श्लो.सं-१०

प्रश्नकर्त्तास्मिन् चक्रे यद्राशेः स्पर्शं करोति तद् आरूढराशिः ज्ञातव्यः।[1] तेन च प्रश्नदिक्फलं ज्ञातव्यम्।

## प्रश्नाक्षरविचारः

अकाराद्यैः ककाराद्यैश्चाक्षरैर्लिपिर्द्विधा कथिता। स्वराक्षरं जीवसंज्ञकं व्यञ्जनाक्षरञ्च शरीरसंज्ञकं भवति। प्रश्नवाक्यस्य प्रथमस्वराक्षरस्य जीवसंज्ञकस्य शुभं फलं भवति। प्रथमव्यञ्जनाक्षरस्य शरीरसंज्ञकस्यैतद्विपरीतं फलं शारीरिकं दोषरोगादिकं भवति। कवर्गात् पवर्गं यावत् पञ्चवर्गाणां प्रत्येकं वर्गाक्षरस्य प्रथमाक्षरं वायुसंज्ञकम्, द्वितीयाक्षरम् अग्निसंज्ञकम्, तृतीयाक्षरम् इन्द्रसंज्ञकम्, चतुर्थाक्षरं जलसंज्ञकम्, पञ्चमाक्षरं नपुंसकसंज्ञकं भवति। स्वरेषु दीर्घाक्षरं जलसंज्ञकं ह्रस्वाक्षरं इन्द्रसंज्ञकं भवति। यवर्गे तथा शवर्गे प्रथमाक्षरं वायुसंज्ञकम्, द्वितीयाक्षरम् अग्निसंज्ञकम्, तृतीयाक्षरं इन्द्रसंज्ञकम्, चतुर्थाक्षरञ्च जलसंज्ञकं भवति।

वाक्यस्य प्रारम्भे नपुंसकाक्षरमत्यन्तमनिष्टफलप्रदं भवति। प्रथमद्वितीये वाय्वग्निसंज्ञकेऽक्षरेऽशुभफलप्रदे भवतः। इन्द्रसंज्ञकं तृतीयं मध्याक्षरं बलरिपुदायकं भवति। जलसंज्ञकं चतुर्थाक्षरं शुभफलप्रदं भवति।[2] इत्थं प्रश्नशास्त्रे विभिन्नप्रकारैः शुभाशुभफलविचारो विधीयते।

* * *

1 तस्मिन्ननिश्चिते चक्रं विलिख्यास्मिन् सूपूजिते।
प्रष्टा स्वर्णेन यं राशिं स्पृशेदारूढ एव सः॥ -प्रश्नमार्गः,द्वि.अ.,श्लो.सं-११

2 आकाशवायुवह्न्यर्णपूर्वं तद्वर्णपूर्वकम्।
भूतार्थवाचकञ्चापि वचनन्न शुभप्रदम्॥
आद्यैस्स्वरैस्तु काद्यैश्च वर्गैर्भिन्ना लिपिर्द्विधा।
स्वरा जीवस्तनुर्वर्गा इति च मातृका॥
प्रश्नवाक्यं स्वराद्यञ्चेज्ज्ञेयं जीवगतं शुभम्।
दोषश्च देहविषयो हलाद्यं चेदतोन्यथा॥ -प्रश्नमार्गः,द्वि.अ,श्लो.सं-१०४-१०६

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# शैवाद्वैतदर्शनयोः शिवब्रह्मतत्त्वयोः तुलनात्मकविवेचनम्

- अनूपत्रिपाठी*[1]

अस्माकं राष्ट्रस्य काश्मीरप्रदेशः शिरोभूषणमस्ति। यत्रैकतः असौ प्रान्तः प्रकृतिपुरुषयोः अनुपमलीलायाः रङ्गभूमिमावहति, तत्र अपरतः सैव शारदाम्बायाः स्वच्छन्द-विहारविलासोल्लासमनुभवति। काश्मीरस्य प्राकृतिकीया सुषमा कवीनां मनीषीणां च कृते निसर्गतः प्रेरणायाः स्रोतः इव द्योतते। एतस्य प्रसादपूर्णसौन्दर्यं शैत्यपावनतथ्यामञ्चित्तं हरितचन्द्रचलमचलञ्चनवभावनोद्भावानां शाश्वतं केन्द्रमेव विद्यते, यत्र बहवः मूर्धन्यकवयः आचार्यवर्याश्च सामान्येन विकासस्यावसरंप्राप्तवन्तः। महाभारतहरिवंशपुराणसंस्कृतवाङ्मय-ग्रन्थेषु काश्मीरस्य प्रशस्ततीर्थता वर्णितास्ति। संस्कृतसाहित्येन काश्मीरप्रदेशं शारदादेशमेव अथवा सरस्वती देशसदृशी आख्यानैः सम्बोधितम्। महाकविः श्रीहर्षः अस्योत्कर्षं सहर्षं चतुर्दशविधानां एनमपीठमभिधाय वर्णयति। किं बहुना शैवदर्शनादिगत दार्शनिकतत्त्वानाम् उद्गमस्थलरूपे काश्मीरे भूमिमेव प्राप्ता। साहित्यालङ्कारवादः आनन्दवर्धनस्य ध्वनिवादः, वामनस्थरीतिवादः, कुन्तकस्य वक्रोक्तिवादः भट्टनायकस्य भुक्तिवादः, अभिनवगुप्तमम्मटयोः अभिव्यक्तिवादः महिमभट्टस्यानुमितिवादः क्षेमेन्द्रस्यौचित्यवादश्च अस्मिन्नेव स्वर्णिमक्षेत्रे उदयम् अभवत्। विभिन्नदार्शनिकसम्प्रदायेषु शैवदर्शनस्य प्रादुर्भावविकासश्च काश्मीरे अभवत्।

काश्मीरशैवमतं प्रत्यभिज्ञादर्शनत्रिकदर्शनेन चापि अभिज्ञायते। अयं वादः स्वातन्त्र्यवादः, ईश्वराद्वयवादः तथाच शिवाद्वैतनाम्नाऽपि स्थापितः। काश्मीरशैवदर्शनस्य मूलस्रोतः तु शैवागमाः अथवा तन्त्राः सन्ति। दार्शनिकदृष्ट्या शिवसूत्रं तु अस्यमतस्याधारसूत्राणि सन्ति। येषांकृते एषा उक्तिः प्रसिद्धास्ति, यदाचार्यवसुगुप्तेन स्वप्ने भगवताशिवेन प्राप्तम्।

*शोधच्छात्रः, अद्वैतवेदान्तविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली-१६

वसुगुप्तस्य (8 विंशतिः) स्पन्दकारिका, सोमानन्दस्य (नवमशती. उत्तरार्धम्) शिवदृष्टिः, उत्पलदेवस्य (दशमशतीपूर्वार्द्धं) प्रत्यभिज्ञाकारिका, अभिनवगुप्तस्य (दशं शती. उत्तरार्धं) प्रत्यभिज्ञाविमर्शिनी परमार्थसारः, तन्त्रालोकश्च तथा क्षेमराजस्य शिवसूक्तविमर्शिनी च अस्य सम्प्रदायस्य अत्यन्तमहत्त्वपूर्णग्रन्थाः सन्ति।

## शिवस्य स्वरूपम्

एतेषां मते एकं शिवैव परमतत्वमस्ति यत् परमात्मा, परमेश्वरः, परमशिवः, अनुत्तरादिनामभिः अभिहिताः। परमात्मतत्त्वकारणतया शिवः शुद्धचैतन्योऽस्ति। चैतन्यः उत चित् इति सदैव शक्तिरूपं भवति। यस्मिन् स्वाभाविकीक्रिया अथवा स्पन्दः अथवा स्फुरणः सन्निहिताः। शुद्धचैतन्यः चित् शक्तिः अस्ति, आत्माचेतनास्ति, स्वं स्वातन्त्र्य आनन्दाश्च इत्यस्य स्वाभाविक-स्फुरणः। चैतन्यस्वरूपेण परमतत्वं शक्तिरूपे मन्यते इति अस्य दर्शनस्य विशेषताः। परमशिवः पराशक्तिस्वरूपः सन्ति। शिवशक्तिश्च परस्परं पृथकं न भवति, चन्द्रः चन्द्रिकायाः समानैव तेषु किमपि अन्तरं नास्ति। शिवः प्रकाशरूपः शक्तिः विमर्शरूपिणी अस्ति विमर्शः आत्मचेतनायाः स्फुरणम्, परा सम्वितस्य स्पन्दमस्ति, चित्-शक्तेः स्वातन्त्र्य तथा आनन्दस्य उल्लासोऽस्ति। यथैव शिव शक्तिषु च किमपि अन्तरं नास्ति तथैव प्रकाशविमर्शेषुच किमपि अन्तरं नास्ति। चैतन्यस्य विमर्शात्मिका क्रिया साधारणं कर्मनास्ति, कर्म तु अपूर्णतायाः द्योतकः भवति, क्रिया अथवा स्वाभाविकस्पन्दः तु पूर्णताशुद्धहन्तास्वतन्त्रता आनन्दाश्च इत्यस्य द्योतकः। शिवः एकभावेन शुद्धज्ञानं ज्ञाताः ज्ञेयश्च अस्ति। इदं तु साधारणसविकल्पकबौद्धिकज्ञानम्, ज्ञाता ज्ञेयश्च त्रिपुर्टिर्नास्ति, अपितु निर्विकल्पकापरोक्षज्ञानमस्ति। यत् शुद्धात्मचैतन्यस्वरूपमस्ति यस्मिन् ज्ञाता ज्ञेयः भिन्नं न भवन्ति। शिवः चैतन्यः, ज्ञाता ज्ञेयः स्वतन्त्रकर्ताश्च सन्ति। शक्तिं विना शिवं स्वस्थचैतन्यस्यापि अनुभवं भवितुं न शक्नोति यतोहि आत्मचेतना विमर्शरूपिणी। शक्तिं विना शिवः शवः अस्ति यतोहि शक्तिं विना शिवे स्पन्दनमपि भवितुं न शक्नोति।

शक्त्यैव शिवस्य चैतन्यस्य, प्रकाशस्य, स्वातन्त्र्यस्य तथा च आनन्दस्य अनुभवः भवति। शिवशक्तिश्च कल्पनायां द्वौ स्तः, किन्तु वास्तविकरूपे एकमेव। अद्वैतस्यार्थः तादात्म्यम् अथवा अपृथकसम्बन्धः। शिवशक्तिश्च चिद्रूपभावनया मूलतः एकमेव। शक्तेः कारणात् शिवे स्पन्दनमस्ति तथा च अस्य स्पन्दने इच्छाज्ञानक्रियायाः च पूर्णसामञ्जस्यास्ति। शक्त्याः कारणात् शिवे आत्मचेतनास्वप्रकाशत्वं पूर्णाहन्ता तथा च स्वातन्त्र्यश्च आनन्दस्यानुभवमस्ति। शिवकारणात् शक्तिः आत्मप्रकाशयोग्यास्ति। उभयेषु पूर्णसामञ्जस्यम् उत समन्वयः अथवा सामरास्यम् अस्ति। शिवशक्तिसामरस्येव अस्य दर्शनस्य विशेषता अस्ति।

जगज्जीवश्च शिवस्वरूपमेवास्ति । शिवस्य लीलायाः विलासः इयं सृष्टिः । शिवः स्वचित्शक्त्या स्वकीयस्वातन्त्र्यश्च आनन्दकारणात् नानाप्रकारेण स्फुटितवान्नस्ति। स्वनानारूपेषु अभिव्यक्तिः शिवस्य स्वातन्त्र्यमस्ति । अस्यैव स्वातन्त्र्यकारणात् ते सृष्टिस्थिति-संहारनिग्रहानुग्रहाणाञ्च एतेषां पञ्चकृत्येषु प्रकृतं भवन्ति । परमशिवः स्वाभ्यान्तरे स्वात्मना स्वकीयोपरि एतेषां विचित्रविश्वाभासानाम् उन्मीलनं कुर्वन्ति । एतस्य कृते तस्मै न तु कस्यचित् उपादानस्य आवश्यकता भवति न कस्यापि आधारस्य । समस्तजड़चेतनपदार्थाः दर्पणप्रतिबिम्बवत् शिवस्याभासाः सन्ति । एते न तु परिणामाः न विवर्तः चित् शक्तेः उन्मीलनकारणात् एते आभासाः सत्यं सन्ति ।

काश्मीरशैवदर्शनस्य अपरं नाम प्रत्यभिज्ञादर्शनमपि । स्पष्टमस्ति यत् प्रत्यभिज्ञा अस्य दर्शनस्य आधारभूत सिद्धान्तः । प्रत्यभिज्ञा मोक्षस्य साधनमस्ति । तथा च स्वयं मोक्षरूपापि । प्रत्यभिज्ञादर्शनं षड्त्रिंशत् (36) तत्त्वानि स्वीकरोति। एते त्रिषु भागेषु विभक्ताः- 1. शिवतत्त्वम्, 2. विद्यातत्त्वम् 3. आत्मतत्त्वञ्च। शिवतत्त्वान्तर्गते शिवशक्तिश्च आयान्ति। विद्यातत्त्वान्तर्गते सदाशिवः, ईश्वर शुद्धविद्याश्च नामकानि त्रीणि तत्त्वानि आयान्ति। एतेभ्यः पञ्चतत्त्वेभ्यः शुद्धा अथवा शुद्धसृष्टिः बुध्यते। एतेभ्यः पञ्चतत्त्वानि क्रमशः परमशिवस्य चिदानन्दीच्छाज्ञानक्रियाश्च नामकपञ्चप्रमुखशक्तिभ्यः अभिव्यक्ताः भवन्ति। आत्मतत्त्वान्तर्गतं मायातः तु पञ्चमहाभूतपर्यन्ते एकत्रिंशत् (31) तत्त्वानि आयान्ति। यस्यान्तर्गते माया 'पञ्चकञ्चुकम्' अथवा आवरणानां सृष्टिं करोति यत् शक्तिं परिच्छिन्नं निर्मापयति।

अयं सम्पूर्णविश्वः शिवचैतन्ये इच्छाशक्तिरूपे स्थितोऽस्ति एवञ्च अयमेव बाह्यजगद्रूपे आभासितं भवति। जगतः बाह्यरूपमपि चैतन्यान्तर्गते एवाऽस्ति। एतदर्थं कश्चित् पदार्थः जड़ न भवति एवञ्च न शिवः चैतन्यात् बहिः अथवा तदभिन्नं भवितुं शक्नोति। अद्वैतवेदान्त बौद्धविज्ञानवादप्लेटोबर्कले आदि विज्ञानवादिप्रभृतिभ्यः अपि जड़ जगत् चैतन्यस्याभासः एव स्वीक्रियते। काश्मीरशैवदर्शनं विश्वं शिवचैतन्यस्य स्वातन्त्र्यकारणात् शिवेन स्वाभ्यन्तरे स्वस्योपरि विना केनापि उपादानेन भित्तेर्वा प्रक्षिप्ताभासं मन्यते। प्रत्यभिज्ञादर्शनानुसारेण शिवः स्वशक्त्या यत् सर्वथा अभिन्नोस्ति तथा तदचैतन्यस्य स्वातन्त्र्यम् एवञ्च आनन्दरूपस्फुरणमस्ति। स्वीयम् तेन जगदाभासां उन्मीलनं कुर्वन्ति। एते आभासाः शिवचैतन्यस्य प्रतिबिम्बाः कथ्यन्ते। किञ्च एते सामान्यदर्पणस्य प्रतिबिम्बेभ्यः भिन्नाः सन्ति। दर्पणप्रतिबिम्बस्य कृते दर्पण प्रतिबिम्बकश्च उभयोर्भिन्नः, बिम्बस्य पृथकसत्ता आवश्यकी, किञ्च विश्वप्रतिबिम्बानां कृते दर्पणः, बिम्बः प्रतिबिम्बश्च सर्वं खलु शिवैव। सृष्टि न तु शिवस्य अनिवार्यस्वरूपम्। न तु ते इदम् उन्मीलितकरणाय बाध्याः सन्ति। इदं तु शिवस्यानन्दातिरेकस्य नर्तनम् अस्ति, तेषां लीलास्ति यत् कर्तुं अथवा अकर्तुं ते पूर्णस्वतन्त्राः सन्ति। पञ्चकृत्यं शिवस्य स्वभावं

एतदर्थं उक्तं यत् एते कृत्याः साधारणकर्माणि न सन्ति, अपितु स्पन्दरूपक्रियाऽस्ति ।

प्रत्यभिज्ञायाः अर्थोऽस्ति 'अभिज्ञानम्' अर्थात् स्वविस्मृतस्वरूपस्याभिज्ञानं प्राप्तञ्चभवेत्। प्रत्यभिज्ञा तु स्मृतिप्रत्यभिज्ञा ज्ञानञ्चउभयोर्भिन्नमस्ति एवञ्च उभयोर्समन्वितरूपमपि। परमतत्त्वे शिवशक्तिसामरस्य समानप्रत्यभिज्ञायां स्मृतिप्रत्यक्षयोः सामरस्यमस्ति। संस्कारजन्योज्ञानं स्मृतिः, इन्द्रियसंवेदनजन्यज्ञानं प्रत्यक्षम्। पूर्वसंस्काराः एवञ्च इन्द्रियसंवेदनस्य तादात्म्यीकरणैः उत्पन्नं ज्ञानं प्रत्यभिज्ञा। एकस्मिन्नुदाहरणे वस्तुव्यक्तीनाञ्चविषये मया ज्ञातं यतोहि पूर्वकाले तं दृष्ट्वा मया तस्य गुणानां विषये श्रुतम्, वयं वस्तुव्यक्तीञ्चवर्तमाने सम्मुखं दृष्ट्वा तस्य प्रत्यक्षज्ञानं कुर्मः, तं सम्मुखं दृष्ट्वा अस्माकं मनसि स्थिता तस्य पूर्वज्ञानसंस्काराः उद्बुद्धाः भवन्ति। एवञ्च वयम् एतेषाम् उत्थितसंस्काराणां तस्य प्रत्यक्षसंवेदनैः तादात्म्यीकरणं कुर्मः, तदा अस्माभिः ते अभिज्ञायन्ते यत् अयं तद्वस्त्वैव व्यक्तिः चास्ति। यस्य ज्ञानं पूर्वमेवासीत्। अनेन अभिज्ञानं हि प्रत्यभिज्ञा इति आचार्याः कथयन्ति। ध्यातव्यमस्ति यत् प्रत्यभिज्ञायां वस्तुव्यक्तीनाञ्चपूर्वज्ञानस्य दशायाम् एवञ्च वर्तमानज्ञानस्य दशासु तात्त्विकएकतायाः स्फुरणं भवति यद् उभयोः दशयोः सामरस्यमस्ति। अतः प्रत्यभिज्ञा बौद्धिकज्ञानेन सह अपरोक्षज्ञानमपि अस्ति यम् अस्य दर्शने पौरुषज्ञानं अभिमन्यते। पूर्वज्ञानस्य दशा तथाच वर्तमानज्ञानस्य दशा बौद्धिकज्ञानमस्ति। किञ्च एतयोः दशयोः तात्त्विकैकतायाः स्फुरणम् अर्थात् द्वयम् अनुभूतिः यत् उभयदशयोः ज्ञाततत्त्वमेकमेवास्ति अपरोक्षानुभवरूपमस्ति।

'तत्त्वमसि' महावाक्यमपि इदं दर्शनं प्रत्यभिज्ञया प्रकाशितं करोति। पुरुषः तु मायाकारणात् अपूर्णज्ञानेन स्वम् अपूर्णशक्तिसम्पन्नं ससीमात्मारुपे आमनन्ति एवञ्च तस्मै स्वशिवस्वरूपस्य विस्मृतिः भवति। यदा गुरुः तम् अवबोधयति यत् 'त्वमेवशिवोऽसि' तेन श्रवणेन, मननेन अध्ययनेनादि उत्पन्नं बौद्धिकज्ञानम् शिवस्य अनुग्रहः, गुरुदीक्षा एवञ्च स्वसाधनया अपरोक्षानुभूतिः प्रत्यभिज्ञा अथवा पौरुषज्ञानेषु परिणतं भवति तर्हि सः स्ववास्तविक शिवस्वरूपम्, पूर्णहन्तायाः चिदानन्दम्, चित् शक्तेः पूर्णस्वातन्त्रता आनन्दं च प्राप्नोति, अयमेव मोक्षः[1]। प्रत्यभिज्ञादर्शनं जीवन्मुक्तिं स्वीकरोति। पौरुषज्ञानेन अज्ञानरूपी आणवमलानां दूरे सति सदेहावस्थायामपि मुक्तिः सम्भवमस्ति यतोहि जीवन्मुक्तः सर्वान् आभासान् शिवरूपे एव पश्यति।[2]

अद्वैतवेदान्तदर्शनस्य केन्द्रम् उपनिषद्दर्शनस्य मूलाचार्य शङ्कराचार्येण प्रतिपादितम्। अद्वैतवेदान्तस्य एकमात्रमेव मुख्यप्रतिपाद्यं ब्रह्मैवास्ति। शङ्कराचार्येण ब्रह्मशब्दस्य व्युत्पत्तिं

1 पौरुषं पुनर्ज्ञानमुदितं सत् अन्यनिरपेक्षमेव मोक्षकारणम्। तन्त्रालोक 1,24
2 पौरुषं पुनर्ज्ञानमुदितं सत् अन्यनिरपेक्षमेव मोक्षकारणम्। तन्त्रालोक 1,24

'बृह् वृद्धौ' धातुना निष्पन्नम् इति प्रतिपादितम्।[1] अस्यानुसारेण 'बृहत्तम् महत्त्वम्' भावं यस्मिन् विद्यमानं भवेत्, वर्धनक्रियायाः समस्तार्थाः यस्मिन्सम्मिलितं भवेत् तं 'ब्रह्म' इति नाम्ना ज्ञायते। अतः ब्रह्म अनन्तशुद्धनित्यमुक्तञ्चास्ति। अस्येव ब्रह्मणः गानं श्रुतिना कृतम्।[2]

शङ्कराचार्येण स्वग्रन्थेषु ब्रह्मणः सर्वोच्चसत्ता स्वीकृता। तस्य सत्ता व्यावहारिकदेशकालिकैः एवञ्च वैचारिकसत्तायै विलक्षणमस्ति। समस्तचेतनाचेतनानां, सामान्यविशेषश्च समस्तवस्तूनाम् अन्तर्भावः ब्रह्मणि भवति। ननु विचारं क्रियते ब्रह्मणः अस्तित्वं सर्वत्रव्याप्तमस्ति, परञ्च देशकालातीतावच्छिन्नकारणात् ब्रह्मणः अस्तित्वं कस्मिन्नपि स्थाने निश्चितरूपेनैव कथितुं शक्यते। वस्तुतः सः एकं सूक्ष्मतत्त्वम् अस्ति, यस्य निर्देशनं मनसा च वाचा असम्भवमस्ति परञ्चइदं तात्पर्यमस्ति यत्तदभावरूपमस्ति। ब्रह्मसत्तां स्वीकुर्वताः शङ्कराचार्येण स्पष्टमुक्तम्- 'ब्रह्मावसानोऽयं प्रतिषेधः नाभावावसानः।[3]

अद्वैतवेदान्ते स्पष्टम् उक्तं यत् तत्वमेकमस्ति, किञ्च विवेचनानुसारेणतद् ब्रह्म सगुणनिर्गुणरूपात्मकं तटस्थस्वरूपलक्षणैश्च युक्तम् अभिधीयते। ब्रह्मणः निर्गुणात्मक-स्वरूपजगताधाररूपे च सामञ्जस्यार्थम् उपनिषद्आधारभूतस्वीकृत्य शङ्कराचार्येण सत्तायाः पारमार्थिक-व्यावहारिक-प्रातिभासिकाश्च त्रिविधस्तराधारे निर्मितः एवञ्च ब्रह्मणः मुख्यतः द्वे रूपेतटस्थलक्षणं तथा च स्वरूपलक्षणं स्वीकृते। वेदान्तपरिभाषाकारानुसारेणतटस्थलक्षणं 'यावल्लक्ष्यकालमनवस्थित्वे सति तद्व्यावर्तकत्वम्।'[4] अथवा कदाचित्कत्वे सति व्यावर्तकं तटस्थलक्षणम्' अर्थात् यः सम्पूर्णलक्ष्ये न भूतेसति इतरस्य व्यावर्तकं भवति सः तटस्थलक्षणं ज्ञायते। अयं ब्रह्मणःस्वरूपस्य तटस्थलक्षणमस्ति।

इदं तटस्थलक्षणं लौकिकदृष्ट्या सगुणब्रह्म, सविशेषः सोपाधिकः, सविकल्पकब्रह्मणः लक्षणमस्ति। अज्ञानकारणात् ब्रह्म सृष्टिरचनायाः निमित्तंतटस्थलक्षणं धारणं कृत्वा निर्गुणात् सगुणं भवति एवञ्च जगतः सृष्टिकर्तापालकः संहारकः भूत्वा जगतः निमित्तोपादानकारणञ्च भवति।

तटस्थलक्षणस्यविधाने यानि धर्माणि स्वीकृतानि तेषां स्थितिःकथञ्चित् कदाचित् भवति। काकादेः चिह्नं मत्त्वा यथा गृहस्य अभिज्ञानंभवति तथैव जन्मादिस्थितिं मत्वा ब्रह्मणः लक्षणं उत्पन्नं भवति।[5] काक-अधिकरणत्वस्य लक्षणे काकस्य अधिकरणः गृहस्यान्तर्गते

1 ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः बृहतेर्धातोरर्थानुगमात्। ब्रह्मसूत्र शांकरभाष्य। 1/1/1
2 ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।। (श्वेताश्वतर-6/11)
3 ब्रह्मसूत्र, शांकरभाष्य 3/2/22
4 वेदान्त परिभाषा, चौखम्भा संस्कृत सीरीज, पेज न. 167
5 काकाधिकरणत्वं हि न अतो गृहस्थधिकरणत्वं नामौपाधिको धर्म इत्यादि। पंचपादिका विवरण.पृ. 625

न भवतियतोहि काकस्य गमनकाले गृहस्य भागैकं नष्टं प्रतीतं (ज्ञानं) भविष्यति। अतः काकाधिकरणत्वं गृहाय औपाधिकमात्रं[1] न तु लक्ष्यस्याङ्गः, केवलंलक्षणान्तर्गते एवास्ति।

इत्थम् आचार्यशङ्करेण 'जन्माद्यस्य यतः'[2] इत्येषु जन्मादिः ब्रह्मणःउपलक्षणमस्ति एवं निर्दिष्टम्। अस्मिन् लक्षणे जन्मादिधर्मः ब्रह्मणःऔपाधिकलक्षणान्तर्गतेऽस्ति, किञ्च लक्ष्यान्तर्गते जन्मादिधर्मस्य, ब्रह्मणःसंसर्गः न भवति। आचार्य अप्पयदीक्षितेन कल्पतरूपरिमले तटस्थस्य लक्षणं कुर्वन्तम् उक्तं यत्- लक्षणं सकलेतरस्य व्यावर्तनं कुर्वता लक्ष्यस्य बोद्धाः भवेयुः। ब्रह्मणः तटस्थलक्षणे त्रयः बिन्दवः विशेषोल्लेखनीयाः-

1. ब्रह्मणः एव सृष्ट्युत्पत्तिः।

2. ब्रह्मणः सृष्टौ अन्तर्व्याप्तता।

3. ब्रह्मणि सृष्टेः अर्न्तर्भावः।

तैत्तिरीयोपनिषदि भृगुऋषये उपदेशं ददानः वरुणेन उक्तम्-यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति येन यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व, तद् ब्रह्मेति।[3] बादरयणमुनिना 'ब्रह्मसूत्रे' इदंलक्षणमेव 'जन्माद्यस्य यतः' सूत्रेण ज्ञापितुं यत्-यतः समस्तभूतानां जन्मस्थितिलानि भवन्ति तद् ब्रह्मास्ति।

## स्वरूपलक्षणम्

स्वरूप सत् व्यावर्तकमिति स्वरूपलक्षणम्' अर्थात् यः वस्तुनः स्वरूपं भूत्वाऽपि तस्य व्यावर्तकं भवेत् तं स्वरूपलक्षणम् अभिधीयते। ब्रह्मणः इयंनिर्गुणं, निर्विशिष्टं, निरुपाधिकं, निर्विकारस्वरूपं 'स्वरूपलक्षणं' अस्ति,यत् पदार्थस्य तात्त्विकरूपस्य निर्देशं करोति। इयं स्वरूपलक्षणमेवतात्त्विकदृष्ट्या ब्रह्मणः लक्षणमस्ति।

अद्वैतवेदान्तानुसारेण 'सत्यं ज्ञानमनन्तम्' एवञ्च ' 'विज्ञानमानन्दं ब्रह्म' इदमेव ब्रह्मणः स्वरूपलक्षणमस्ति। ब्रह्मणः इदं स्वरूपलक्षणमपि नेतिपरकमेव अवगम्यते।[4] ब्रह्म तु निर्गुणं, निर्विशेषं, निरुपाधिकं तथाचास्य निर्विकल्पसत्ता अस्ति। विवेकचूडामणिग्रन्थे इदं तथ्यं वर्णनं कुर्वता उक्तं यत् ब्रह्म समस्तमायिकभेदैः रहितं नित्यसुखस्वरूपं, कलारहितंप्रमाणानाञ्चाविषयमस्ति। स्वरूपलक्षणयुक्तं तद् ब्रह्म कमपि अरूपम्,अव्यक्तं,

1 कल्पतरुपरिमल, अप्पय दीक्षित, पृ.सं. 84
2 ब्रह्मसूत्र 1/1/2
3 कल्पतरुपरिमल , अप्पयदीक्षित , पृ.संख्या – 84
4 तैत्तिरीयोपनिषद् (3/1 )

अनाम, अक्षयतेजञ्च, स्वयमेव प्रकाशितं भवति। तस्य न तु किमपि रूपम् नाकारश्च।[1] आचार्यशङ्कराचार्यानुसारेण ब्रह्मतत्त्ववेता निर्विकल्पकं केवलाखण्डचैतन्यश्च मात्रमेव ज्ञायते। शङ्कराचार्येण विवेकचूडामणिग्रन्थे उक्तं यत् यः प्रकृत्या दूरे (परे भवति) एवञ्च वाणीनाम् अविषयोऽस्ति तं शुद्धान्तःकरणेन एवञ्च ज्ञानचक्षुभिः एवं ज्ञातुंशक्नुमः, तदेव चिद्-ब्रह्मास्ति, यः शुद्धचिद्घनानादिः अस्ति।

**शिवब्रह्मणोस्तुलना**

शैवदर्शनं शिवः एकम् अद्वयं तत्त्वं, यत् विभिन्न नामभिः अभिज्ञायते। परमात्मतत्त्वकारणात् शिवः शुद्धचैतन्योऽस्ति। किञ्च अयं चैतन्यः, अद्वैतवेदानतस्य सदृशं ज्ञातृज्ञेयं अथवा विषयि-विषयरहितः अथवाक्रियाशून्यः नास्ति। शैवदर्शने चैतन्यः सदैव शक्तिरूपे भवति यस्मिन्स्वाभाविकी क्रियास्पन्दश्च स्फुरति। शुद्धचैतन्यचित्शक्तिरिति, आत्मचेतनास्ति, स्वस्वातन्त्र्यस्य एवम् आनन्दस्य स्वाभाविकस्फुरणमस्ति। चैतन्यस्वरूपेण परमतत्त्वं शक्तिरूपे मन्यते इति अस्य दर्शनस्यविशेषता। परमशिवः पराशक्तिस्वरूपः अस्ति। शिवशक्तिश्च परस्परं पृथक् न भवन्ति। शिवः प्रकाशरूपः, शक्तिः विमर्शरूपिणी अस्ति। जगज्जीवश्च शिवस्वरूपमेवास्ति। शिवस्य लीलायाः विलासः इयं सृष्टिः शिवः स्वचित्शक्त्या स्वकीयं स्वातन्त्र्यमानन्दकारणात् नानाप्रकारेणस्फुटितवन्तः सन्ति। स्वं नानारूपेषु अभिव्यक्तिईच्छा शिवस्य स्वातन्त्र्यमस्ति। सृष्टिः न तु शिवस्य अनिवार्यस्वरूपम्, इदं तु शिवस्यानन्दातिरेकस्य नर्तनमस्ति। पञ्चकृत्यं तस्य स्वभावम्। एतदर्थमुक्तं यदेते कृत्यानि साधारणकर्माणि न सन्ति, अपितु स्पन्दनरूपक्रियास्ति। यस्यां शिवस्य स्वातन्त्र्यं समुल्लसितम् अनायासमेवभवति। यत् आनन्दातिशयं अतिरिच्य किमपि उद्देश्यं नास्ति। एते आभासाः परिणामाः न सन्ति यतोहि एते मिथ्या न सन्ति। एते आभासाः शिवे अवस्थितत्वात् शिवरूपाः सन्ति।

अद्वैतवेदान्ते शङ्कराचार्यानुसारेण जगत् ब्रह्मणः विवर्तरूपः न तु परिणामः। जगत् ब्रह्मणः प्रतीतिमेव, विकारः अथवा तात्त्विकपरिवर्तनं न, ब्रह्म तु कूटस्थं नित्यमस्ति। अतः तस्मिन् किमपि प्रकारकं परिवर्तनं सम्भवंनास्ति। माया उत अविद्याकारणात् ब्रह्म, जीवः जगतरूपे प्रतीतं भवति।

अतः जगत्कारणता सगुणब्रह्मणः तटस्थलक्षणमस्ति। सगुणब्रह्म अथवा ईश्वरः अस्य जगतः उत्पत्तिः-स्थितिः-लयस्य कारणाम्। सः सर्वज्ञःसर्वशक्तिमान्, सर्वव्यापकः, सर्वान्तर्यामी एवञ्च सर्वेषां स्वामी अस्ति। 'सर्वं खल्विदं ब्रह्म'। सगुणब्रह्मणः स्वरूपलक्षणमस्ति- 'सत्यं

1 अरूपमव्यक्तमनारण्यमव्ययम्, विवेक चूडामणि 240

ज्ञानमनन्तं ब्रह्म (ब्रह्म सत् चिदानन्दः भवति) 'विज्ञानमानन्दं ब्रह्म'। श्रुतयः बारम्बारं ब्रह्मविषयंनित्यसत्-शुद्धचैतन्यम् एवञ्च अखण्डानन्दं बोधयन्ति। ब्रह्म त्रिकालाबाधसत् अस्ति। सः कूटस्थनित्यं च अपरिणामी अस्ति। ब्रह्म तु शुद्धनिर्विकल्पकचैतन्यमस्ति। ब्रह्म तु वस्तुतः निर्गुणः निर्विशेषः, अतः अलक्षणीयः अस्ति। इन्द्रियेण, बुद्धिविकल्पेन वाचा च न (ग्राह्यमानः) अगोचरःअथवा अतीन्द्रियः निर्विकल्पः तथा च अनिर्वचनीयत्वेन अभिधीयते। समस्ता अनुभवानाम् अधिष्ठानभूतेन ब्रह्म तु स्वतः प्रकाशसिद्धात्मचैतन्योऽस्ति। यदि तस्य वर्णनस्य जिज्ञासा भवेत् तर्हि निषेधमुखेन क्रियते। ब्रह्मणः विषये आदेशः 'नेति नेति' अस्ति। 'नेति नेति' विधिना ब्रह्मणः गुणानां, विशेषणानां, निर्वचनानां, च निषेधः भवति,। 'नेति नेति' इत्यनेन ब्रह्मणः अनिर्वचनीयता सिद्धा भवति, तस्य शून्यता नास्ति। ज्ञातृज्ञेयज्ञानत्रिपुटिना रहितं ब्रह्म।

इत्थं इदं वक्तुं शक्यते यत् काश्मीरशैवदर्शने शिवैव एकमात्रम् अद्वयतत्त्वमस्ति, यतः इदं सम्पूर्णं जगत् चलायमानमस्ति एवञ्च एतस्मिन् घटितसमस्त क्रियाणां शिवस्य लीलामात्रमेव यत् तस्य इच्छानिर्भरोऽस्ति। अद्वैतवेदान्तानुसारेण एवमेवपरमसत्ता ब्रह्मैव यस्मिन् मायया अभ्यासकारणात् सम्पूर्णजगतः प्रपञ्चं दृश्यमानमस्ति। इदं जगत् तु ब्रह्मणः परिणामो नास्ति विवर्तोऽस्ति। यस्योपरि सम्पूर्णजगतः मिथ्याभासः अज्ञानमायाकारणात् भवन्नस्ति। अतः तद् ब्रह्मविषयकाज्ञानस्य निवृत्तिं कृत्वा मोक्षभावप्राप्तिः भवेत् इति साधकस्य अन्तिमा इच्छा।

## सन्दर्भ-ग्रन्थ-सूची

तन्त्रालोकः, अभिनवगुप्तः, सम्पादकौ- डॉ.रामचन्द्र द्विवेदी, डॉ. नवजीवन रस्तोगी, प्रकाशकः, मोतीलाल बनारसीदास, दिल्ली, 1987

ब्रह्मसूत्रशांकरभाष्यम्- भामती, परमहंस परिव्राजकाचार्योदासीनवर्य-स्वामिश्रीऋषिरामशिष्य स्वामियोगीन्द्रानन्दकृतम्, (भाग- 1) प्रकाशकः – चौखम्बाविद्याभवनम् वाराणसी – 2012

विवेकचूड़ामणिः, आचार्यशंकराचार्यः, स्वामीप्रज्ञानन्दसरस्वतीः, सुनियोजकः - डा. राजकुमारउपाध्यायः "मणिः", चौखम्भासंस्कृतभवनवाराणसीः, सन्- 2010

पञ्चपादिकाविवरणम्, चित्सुखाचार्यकृततात्पर्यदीपिकया नृसिंहाश्रमकृतम्- भावप्रकाशिका च संवलितम्, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपतिः, 1998

श्वेताश्वतरोपनिषद्, शंकराचार्यः, गीताप्रेसगोरखपुरम् ।

तैत्तिरीयोपनिषद्, मेलुकोटे: संस्कृतसंशोधनं संसत्यादावाद्रिः भाष्यम् स्वामी प्रधानसम्पादकः

बृहदारण्यकोपनिषद्, शंकराचार्यः, गीताप्रेसगोरखपुरम्, सन् – 2013

वेदान्तकल्पतरुपरिमलः, अप्पयदीक्षितः, संपादक : तैलंगरामशास्त्री, मेडिकलहालनाभिमन्त्रालये ई.ले. लाक्षारस – 1952

वेदान्तपरिभाषा, धर्मराजाध्वरीन्द्रः, सम्पादकः - पारसनाथद्विवेदी, सहसम्पादकः- डा. ददनः , उपाध्यायः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, 2000 .

* * *

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# समसामयिकसन्दर्भेषु सम्राजः अशोकस्य प्राकृत-अभिलेखानां भौगोलिकस्थानानां निर्णीतेः उपयोगिता

**-रूपमदासः***

यदि कस्मिन् अपि विषये अत्यन्त-प्रामाणिकी-सूचना आवश्यकी भवति, तर्हि विद्वांसः एतादृशेषु स्रोतेषु अभिलेख-साहित्यं सर्वाधिक-महत्त्वपूर्णमिति मन्यन्ते । भारतभूमेः प्राप्यमाणेषु सर्वेषु प्राचीनाभिलेखेषु केवलं सम्राजः अशोकस्य अभिलेखाः एव अपेक्षकृत-व्यापक-व्यवस्थितरूपेण प्राप्यन्ते । सम्राजः अशोकस्य समयः ख्रिस्तपूर्व-चतुर्थशताब्दीतः ख्रिस्तपूर्व-तृतीयशताब्दी पर्यन्तं विद्वद्भिः अभिमतः ।

सम्राजः अशोकस्य अभिलेखानां त्रयः भेदाः वर्तन्ते (1) शिलालेखाः (2) स्तम्भलेखाः (3) लघुलेखाश्चेति । अपि च प्रकीर्णक-लेखाः अपि केचित् वर्गीकुर्वन्ति । एतेषु विद्वद्भिः अभिमतं यत् - सम्राट् अशोकः प्रथमं शिलालेखानां लेखनाय आदिष्टवान्, तदुक्तं यत् – **“देवानंपियो पियदसि राजा एवं आह द्वादसवासाभिसितेन मया इदं आञपितं”**[1] इति (गिरनारशिलालेखस्य तृतीय-अनुच्छेदः) । तदनु सम्राजा अशोकेन स्तम्भ-लेखानां लेखनार्थमादिष्टवान् – **“देवानंपिये पियदसि लाज हेवं आहा सड्वीसति-वस-अभिसितेन मे इयं धंम-लिपि लिखापिता”**[2] इति (दिल्ली-टोपरा-स्तम्भलेखस्य प्रथम-अनुच्छेदः) । सम्राट् अशोकः चरमरूपेण प्रयोगवशात् लघुलेखानां स्थापनार्थमाज्ञापितवान् । सम्राजः अशोकस्य अभिलेखानां भाषा प्राकृतभाषा आसीत् ।

---

* **शोधच्छात्रः, प्राकृतभाषाविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली**

1 A COLLECTION OF PRAKRIT AND SANSKRIT INSCRIPTIONS, PAGE -2

2 SELECT INSCRIPTIONS BEARING ON INDIAN HISTORY AND CIVILIZATION ( VOL-I ), 1ST EDITION , PAGE -55

**शिलालेखाः -** पर्वतस्य कठिनशिलासु उत्कीर्णिताः लिखिताः लेखाः 'शिलालेखाः' इति कथिताः । सम्राजः अशोकस्य एते शिलालेखाः तदानीन्तन वृहत्तरभारतवर्षे (गिरनारः, कालसी, शाहबाजगढ़ी इत्यादिषु) दशविध-स्थानेषु उतकीर्णिताः सन्ति । सम्राजः अशोकस्य शिलालेखानां सम्पूर्णाः चतुर्दश-अनुच्छेदाः गिरनार-कालसी-शाहबाजगढ़ी-मानसेहरा-एर्रगुडी-स्थानेषु प्राप्यन्ते ।

**स्तम्भलेखाः -** सम्राट् अशोकः स्तम्भेषु अपि केचन लेखाः उत्कीर्णाय आदिष्टवान् । एते स्तम्भाः बालुकापाषाणेन निर्मिताः सन्ति । सम्राट् अशोकः एतादृशान् बृहत्स्तम्भान् गोलाकाररूपेण निर्मापितवान् । तेषु स्तम्भेषु काश्चन कलाकृतयः अपि निर्मिताः सन्ति । एतेषां स्तम्भानामुपरि लेखाः उत्कीर्णाः कारिताः । एतान् स्तम्भान् स्वसाम्राज्यस्य विभिन्नेषु स्थानेषु स्थापनाय आदिष्टवान् । एते लेखाः 'स्तम्भलेखाः' इति नाम्ना प्रसिद्धाः सन्ति । सम्प्रति एते स्तम्भाः वर्तमानभारतवर्षस्य षड्सु (दिल्ली-प्रयाग-लौरिया-इत्यादिषु) स्थानेषु विद्यन्ते ।

**लघुलेखाः -** सम्राट् अशोकः वृहच्छिलालेखान् तथा च स्तम्भलेखान् परित्यज्य क्षुद्र-शिलाखण्डेषु, मन्दिरगात्रेषु, सोपानेषु, लघुस्तम्भेषु च केचन लेखाः उत्कीर्णिताः कारिताः। एते लेखाः विद्वद्भिः 'लघुलेखाः' इति कथिताः । एते लघुलेखाः सहसराम-रूपनाथ-इत्यादिषु षडविंशत्यां स्थानेषु उपलभ्यन्ते ।

**प्रकीर्णक-लेखाः -** सम्राट् अशोकः शिलालेखान् सम्भलेखान् लघुलेखान् च विहाय अपि काञ्चन लेखान् उत्कीर्णितवान् । एतान् अभिलेखान् पण्डिताः 'प्रकीर्णक-लेखाः' इति वदन्ति। एते लेखाः कन्दहार-तक्षशिला इत्यादिषु षड्सु स्थानेषु प्राप्यन्ते ।

अत्र एतेषां स्थानानां परिचयं दद्मः, ते तु एतेषां अभिलेखानां ऐतिहासिक-नामानि सन्ति । सम्प्रति तेषां स्थानानां वर्तमानपरिचयं किम् ? सम्प्रति एते स्थानाः तत्र सन्ति न वा, यदि सन्ति तर्हि केन रूपेण सन्ति ? प्राचीनस्थानानां वर्तमानपरिचयस्य विषये अवगमनाय एतत् शोधालेखं लिखामि ।

**शिलालेखाः -** सम्राट् अशोकः चतुर्दश-अनुच्छेदानि विशालशिलासु अभ्यलेखयत् । सम्राजः अशोकस्य शिलालेखाः 'धर्मलेखाः' (धर्मलिपिः) नाम्ना अपि प्रसिद्धाः सन्ति । यथा सम्राजः अशोकस्य गिरनारशिलालेखे उल्लिखितं यत् – **"इयं धंम-लिपी देवानं पिं(प्रि) येन पिं (प्रि) यदसिना राञा लेखा पि [ता] [ ।]"**[1] इति । एते शिलालेखाः ब्राह्मी-खरोष्ठी-

1 SELECT INSCRIPTIONS BEARING ON INDIAN HISTORY AND CIVILIZATION ( VOL-I ), 1ST EDITION , PAGE -16

लिप्योः तथा च प्राकृत-भाषायां निबद्धाः सन्ति ।

सम्राजः अशोकस्य शिलालेखानां प्राप्तिस्थानानां साम्प्रतिकी अवस्थितिः -

**1. गिरनारः -** भारतवर्षस्य गुजरातराज्यस्य जूनागढ़-नगरात् पूर्वदिशि प्रायः 1.6 कि.मी. दूरे गिरनारपर्वतं निकषा एतत्स्थलम् अस्ति । यस्मिन् शिलाखण्डे अशोकस्य चतुर्दश-अनुच्छेदानि उत्कीर्णानि सन्ति, तस्य क्षेत्रफलं प्रायः 100 वर्गफुट यावत् अस्ति । विशालशिलाफलकेऽस्मिन् रुद्रदामन-स्कन्दगुप्तयोः अभिलेखौ अपि स्तः । एतेषां लेखानामपि लिपिः ब्राह्मी अस्ति ।

**2. कालसी -** भारतवर्षस्य उत्तराखण्डराज्यस्य राजधानी देहरादून-नगरात् चुहरपुरदिशि मार्गे 'कालसी' इति ग्रामः अस्ति । ततः नातिदूरं प्रायः 3 कि.मी. दूरे वृहच्छिलालेखानां प्रतिलिपयः सन्ति । अत्रापि अशोकस्य शिलालेखस्य चतुर्दश-अनुच्छेदानां प्रतिलिपयः विशालशिलायाम् उत्कीर्णिताः सन्ति । इयं शिला 10 पाददीर्घा, 10 पादोन्नता, तस्याः स्थूलता प्रायः 8 पादान् यावत् च वर्तते । एतेषामनुच्छेदानां लिपिः 'ब्राह्मी' अस्ति ।

**3. शाहबाजगढी -** वर्तमान-पाकिस्तानदेशस्य 'खैबर-पखतूनख्वा प्रान्तस्य मरदानमण्डले शाहबाजगढ़ी इति पुरातत्त्वस्थलः वर्तते । इदं स्थानं मरदान-नगरतः 12 कि.मी दूरे वर्तते । तथा च एषः ग्रामः पेशावरनगरस्य उत्तर-पूर्वदिशि 64 कि.मी. दूरे 'मकाम'-नद्याः तटे स्थितः वर्तते।[1] ततः प्रायः 1 कि.मी. दूरे चतुर्दश-अनुच्छेदानां प्रतिलिपयः विद्यमानाः सन्ति । एतासां अनुच्छेदानां लिपिः 'खरोष्ठी' । यस्यां शिलायाम् एते लेखाः उत्कीर्णाः सन्ति, सा 24 पाददीर्घा, 10 पादोन्नता, 10 पादा परिमिता स्थूला[2] अस्ति ।

**4. मानसेहरा -** वर्तमान-पाकिस्तानदेशस्य 'खैबर- पखतूनख्वा' प्रान्तस्य एकस्प मण्डलस्य नाम मानसेहरा । स्थानमिदं पाकिस्तानस्य उत्तर-पश्चिम सीमाप्रान्ते वर्तते । एतत् स्थानं हजारामण्डलस्य एबटाबादतः प्रायः 24 कि.मी. दूरे अस्ति । अशोकस्य चतुर्दश-अनुच्छेदानां प्रतिलिपयः मानसेहरास्थले प्राप्यते । प्राप्तानां अनुच्छेदानां लिपिः 'खरोष्ठी' इति । एते शिलालेखाः 'मानसेहरा-शिलालेखाः' नाम्ना विश्रुताः जाताः । मानसेहरा-शिलालेखाः पृथक् पृथक् त्रिषु शिलासु उत्कीर्णिताः सन्ति । प्रथमशिलायां प्रथमतः अष्टमपर्यन्तम् अष्ट-अनुच्छेदाः उत्कीर्णिताः सन्ति, द्वितीयशिलायां नवमतः द्वादशपर्यन्तं चत्वारः अनुच्छेदाः उत्कीर्णिताः सन्ति, तृतीय-शिलायां त्रयोदश-चतुर्दशौ द्वौ अनुच्छेदौ उत्कीर्णितौ स्तः ।

**5. एर्रगुडी -** भारतवर्षस्य आन्ध्रप्रदेशस्य कुर्नूलमण्डलस्य एकस्य ग्रामस्य नाम 'एर्रगुडी' अस्ति । चेन्नईतः (मद्रासतः) रायचूरपर्यन्तं रेलमार्गे शाखारेखायां 'गुटी' इति रेलस्थानकात्

1 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 2
2 मौर्य साम्राज्य का इतिहास (छठा संस्करण), पृष्ठा – 608

प्रायः 12.5 कि.मी. दूरे इदं स्थानमस्ति । अस्य ग्रामस्य समीपस्थे **'येनकोण्डा'** इति पर्वतस्य शिलायाम् अशोकस्य चतुर्दश-अनुच्छेदानां प्रतिलिपयः ब्राह्मी-लिप्याम् उत्कीर्णिताः सन्ति ।

**6. धौली -** भारतवर्षस्य ओडीशाप्रदेशस्य पुरीमण्डलस्य खुर्दा-जनपदे 'धौली' इति ग्रामः अस्ति । एषः ग्रामः भुवनेश्वरतः दक्षिणदिशि प्रायः 10 कि.मी. दूरे अस्ति । धौलीसमीपे त्रयाणां पर्वतानां लघुशृङ्खला वर्तते, यत्र अशोकस्य अनुच्छेदाः **'अश्वस्तम्'** नामक-शिलायां ब्राह्मीलिप्याम् उत्कीर्णिताः सन्ति । अत्र प्रथमतः आरभ्य दश-पर्यन्तम् अनुच्छेदाः तथा च चतुर्दशतम-अनुच्छेदाः उपलभ्यन्ते । अत्र एकादशतः त्रयोदश-पर्यन्तम् अनुच्छेदाः न उपलभ्यन्ते । अत्र एकादश-द्वादश-त्रयोदश-अनुच्छेदानां स्थाने पृथक्-पृथक् शिलालेखद्वयं वर्तते । विद्वद्भिः एतयोः अभिलेखयोः 'कलिङ्ग-अभिलेखः' इति कथ्यन्ते ।

**7. जौगढः -** भारतवर्षस्य ओडिशाप्रान्तस्य गञ्जाम-मण्डले एकः विध्वस्तः दुर्गः अस्ति। एषः दुर्गः **'जौगढ'** नाम्ना विख्यातः वर्तते । एतत् स्थानं ब्रह्मपुरतः प्रायः 35 कि.मी. उत्तरपश्चिमदिशि तथा च भुवनेश्वरतः 160 कि.मी. दक्षिण-पश्चिमदिशि दूरे अवस्थितम् । अत्र अशोकस्य अभिलेखाः शिलागात्रे पृथक्-पृथक् त्रिषु शिलाखण्डेषु उत्कीर्णिताः सन्ति। प्रथमशिलायां प्रथमतः पञ्चमपर्यन्तं पञ्च-अनुच्छेदाः उत्कीर्णिताः सन्ति । द्वितीयशिलायां षष्ठतः दशमपर्यन्तं पञ्च-अनुच्छेदाः उत्कीर्णिताः सन्ति । अत्र एकादशतः त्रयोदश-पर्यन्तम् अनुच्छेदाः न उपलभ्यन्ते । अत्रापि एकादश-द्वादश-त्रयोदश-अनुच्छेदानां स्थाने पृथक्-पृथक् शिलालेखद्वयं वर्तते । विद्वद्भिः एतयोः अभिलेखयोः 'कलिङ्ग-अभिलेखः' इति कथ्यन्ते ।

**8. सोपारा -** भारतवर्षस्य महाराष्ट्रराज्यस्य 'मुम्बई' नगरतः उत्तरदिशि ठाणेमण्डले समुद्रतटः वर्तते । तत्रैव 'सोपारा' नाम स्थानं विद्यते । महाभारतकाले अस्य स्थानस्य नाम 'शूर्पारकः' आसीत् । अत्र पोताश्रयः (Sea-Port) आसीत् । समुद्रीय-व्यापारस्य महत्त्वपूर्ण-केन्द्रत्वात् अशोकस्य चतुर्दश-अनुच्छेदानां प्रतिलिपयः अत्रापि उत्कीर्णिताः वर्तन्ते। अत्र अष्टम-नवमानुच्छेदयोः[1] खण्डिता-अंशाः अस्मिन् सोपाराशिलालेखे प्राप्यन्ते । अयं लेखः ब्राह्मीलिप्यामस्ति ।

**9. सन्नति -** भारतदेशस्य कर्नाटकप्रान्तस्य गुलबर्गामण्डलस्य 'चितापुर' तालुकान्तर्गतस्य भीमानद्याः तटे 'सन्नति' इति ग्रामः अस्ति । अयं स्थलः नलवाड-रेलस्थानकात् प्रायः19 कि.मी दूरे अस्ति । सन्नति-ग्रामस्य कालिकाम्बयाः विध्वस्तमन्दिरे अशोकस्य शिलालेखः प्राप्तः । इदं शिलाफलकं अस्य देवालयस्य अधिष्ठात्री उत्तरादेव्याः प्रतिमायाः पदासनरूपेण

1 ASOKAN SITES AND ARTEFACTS (A SOURCE BOOK WITH BIBLIOGRAPHY), PAGE-136

आसीत् । शिलाफलकस्य एकस्मिन् पार्श्वे सम्राजः अशोकस्य द्वादश-चतुर्दशौ[1] एतद् द्वौ अनुच्छेदौ स्तः, तथा च अपरस्मिन् पार्श्वे जौगढे सम्प्राप्ते द्वौ इतर-अभिलेखौ (कलिङ्गाभिलेखः) वर्तेते ।

**10. कन्दहारः -** अफगानिस्तानस्य कन्दहारप्रान्तस्य राजधानी तथा ऐतिहासिकनगरस्य नाम 'कन्दहारः' अस्ति । महाभारतकाले अयं स्थानः 'गन्धारः' इति प्रसिद्धः आसीत् । कन्दहारनगरात् प्रायः 11 कि.मी. दूरे इदं स्थानं वर्तते । पुरातनकन्दहार-नगरस्य 'शर-ए-कुना' इति धार्मिकस्थानकात् बहिः चतुर्षु शिलाखण्डेषु एते अनुच्छेदाः उत्कीर्णिताः सन्ति। अत्र द्वादश-अनुच्छेदस्य अधिकांशः अंशाः तथा च त्रयोदश-अनुच्छेदस्य[2] केचन भागाः उपलभ्यन्ते । एषः अभिलेखः काबुलस्य संग्रहालये संरक्षितः वर्तते । अस्य लेखस्य लिपि 'यवन-लिपि'[3] इति ।

**स्तम्भलेखाः -** सम्राट् अशोकः स्तम्भेषु अपि स्वस्य अभिलेखान् निर्मापितवान् । एतेषु सर्वत्र प्राकृतभाषा-ब्राह्मीलिप्योः प्रयोगः दृश्यते । अशोकस्य एते लेखाः षट्सु भिन्नेषु स्तम्भेषु उत्कीर्णिताः वर्तन्ते ।

सम्राजः अशोकस्य स्तम्भलेखानां प्राप्तिस्थानानां साम्प्रतिकी अवस्थितिः-

**1. दिल्ली-टोपरा-स्तम्भः -** अयं स्तम्भः भारतवर्षस्य राजधानी 'नवदेहली' नाम्ना केन्द्रशासितप्रदेशे 'फिरोजशाह-कोटला' नामकं स्थाने वर्तते । प्राक्तनकाले अयं स्तम्भः हरियाणाप्रदेशस्य अम्बालामण्डलस्य 'टोपरा' इति ग्रामे आसीत् । अयं स्तम्भः फिरोजशाह-तुगलकेन (तुगलकवंशस्य शासकः, समयः प्रायः 1351-1388 ई.) दिल्लीनगरं प्रति आनीतः । भूमौ अस्य स्तम्भस्य ऊर्ध्वता 42 फुट 7 इञ्च[4] परिमिता अस्ति । अस्मिन् स्तम्भे सम्राजः अशोकस्य स्तम्भलेखानां प्रथमतः सप्तमपर्यन्तं सप्त-अनुच्छेदाः उत्कीर्णिताः सन्ति । अस्मिन् स्तम्भे एते सप्त-अनुच्छेदाः सुरक्षिताः सन्ति । सम्पूर्णाः सप्त-अनुच्छेदाः अन्यस्मिन् कस्मिन्नपि स्तम्भे न प्राप्यन्ते ।

**2. दिल्ली-मेरठ-स्तम्भः -** सम्राजः अशोकस्य अन्यः एकः स्तम्भः अपि भारतवर्षस्य दिल्लीनगरे वर्तते । अयं स्तम्भः दिल्ली विश्वविद्यालय-परिसरस्य सम्मुखे 'हिंदु-राव

1 ASOKAN SITES AND ARTEFACTS (A SOURCE BOOK WITH BIBLIOGRAPHY), PAGE-130-131

2 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 78

3 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 6

4 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 78.

अस्पताल' इत्यस्य प्रवेशद्वारस्य सम्मुखे 'जीतगढ'[1] इति क्षेत्रे वर्तते । आदौ अयं स्तम्भः 'उत्तरप्रदेश'स्य मेरठ-मण्डलान्तर्गतः आसीत् । अयं स्तम्भः अपि फिरोजशाह-तुगलकेन दिल्लीनगरं प्रति आनीतः । अस्य स्तम्भस्य ऊर्ध्वता प्रायः 33 फुट[2] परिमिता अस्ति । सम्राजः अशोकस्य 'दिल्ली-टोपरा' स्तम्भस्य प्रथमतः आरभ्य पञ्चमपर्यन्तं पञ्च-अनुच्छेदाः[3] अत्र उत्कीर्णिताः प्राप्यन्ते । अयं स्तम्भः बारूदस्य विस्फोटस्य कारणेन पञ्चखण्डेषु भग्नाः जाताः[4] (अनुमानित-समयः 1713-1719 ई.) । अस्य स्तम्भस्य षष्ठ-अनुच्छेदस्य पंक्तिद्वयं अधुना ब्रिटिश-सङ्ग्रहालये (लन्दनः) प्रदर्शितः दृश्यते ।

**3. प्रयागस्तम्भः -** भारतवर्षस्य उत्तरप्रदेशप्रान्तस्य प्रयागराजनगरे प्रयागस्तम्भः वर्तते । अयं स्तम्भः सम्प्रति प्रयागस्य दुर्गे अस्ति । आदौ अयं स्तम्भः कौशाम्बी-नगरे आसीत्। सम्राजः अशोकस्य 'दिल्ली-टोपरा' इत्यस्य स्तम्भस्य प्रथमतः आरभ्य षट्-पर्यन्तं षट्-अनुच्छेदाः अस्मिन् स्तम्भे उत्कीर्णिताः सन्ति । अस्य स्तम्भस्य दीर्घता 42 फुट 7 इंच[5] परिमिता अस्ति। अस्मिन् स्तम्भे समुद्रगुप्तस्य स्तुतिः, रानी अभिलेखः, कौशाम्बी अभिलेखः, जहाङ्गीरस्य अभिलेखाश्चापि प्राप्यन्ते ।

**4. लौरिया-अरराज-स्तम्भः -** अयं स्तम्भः भारतवर्षस्य बिहारप्रान्तस्य चम्पारणमण्डले विद्यते । अयं स्तम्भः 36.5 फुट[6] यावत् ऊर्ध्वः अस्ति । राधिया ग्रामस्य पूर्व-दक्षिण-दिशि 4 कि.मी दूरे अरराज-महादेवस्य[7] मन्दिरम् अस्ति । ततः प्रायः 1.5 कि.मी. दूरे अयं स्तम्भः अस्ति । दिल्ली-टोपरा-स्थितः स्तम्भस्य प्रथमतः आरभ्य षट्-पर्यन्तं षट्-अनुच्छेदाः अस्मिन् स्तम्भे प्राप्यन्ते, सप्तमो अनुच्छेदः न प्राप्यते ।

**5. लौरिया-नन्दनगढ-स्तम्भः -** अयं स्तम्भः भारतवर्षस्य बिहारप्रान्तस्य चम्पारणमण्डले विद्यते । इदं स्थानं 'नरकटियागञ्ज' इति स्थानतः प्रायः 14 कि.मी दूरे अस्ति । अयं स्तम्भः

1 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 8.

2 https://en.m.wikipedia.org/wiki/Ashokan_Edicts_in_Delhi#:~:text=Delhi%2DMeerut%20pillar,-A%20portion%20of&text=As%20seen%20now%2C%20it%20is,and%20re%2Derected%20in%201887.

3 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 10.

4 CORPUS INSCRIPTIONUM INDICARUM VOLUME – I, INSCRIPTION OF ASOKA, 1877 A.D., Page -37

5 अशोक के अभिलेख (प्रथम संस्करण, संवत् 2022), पृष्ठा – 11.

6 CORPUS INSCRIPTIONUM INDICARUM VOLUME – I, INSCRIPTION OF ASOKA, 1877 A.D., Page -40

7 मौर्य साम्राज्य का इतिहास, पृष्ठा – 616.

32 फुट 9.5 इञ्च[1] यावत् ऊर्ध्वः अस्ति । अस्मिन् स्तम्भे अपि दिल्ली-टोपरा इत्यस्य स्तम्भस्य प्रथमतः आरभ्य षट्-पर्यन्तं षट्-अनुच्छेदाः उत्कीर्णिताः सन्ति ।

**6. रामपुरवा-स्तम्भः -** अयं स्तम्भः भारतवर्षस्य बिहारप्रान्तस्य चम्पारणमण्डले विद्यते । बेतियातः उत्तरदिशि प्रायः 50 कि.मी. दूरे 'रामपुरवा' नाम स्थानमस्ति । अत्र सम्राजः अशोकस्य अपरः एकः स्तम्भः अस्ति, यस्य ऊर्ध्वता 44 फुट 9.5 इंच[2] परिमिताऽस्ति। अस्मिन् स्तम्भेऽपि दिल्ली-टोपरा इत्यस्य स्तम्भस्य प्रथमतः आरभ्य षट्-पर्यन्तं षट्-अनुच्छेदाः उत्कीर्णिताः प्राप्यन्ते ।

**लघुलेखाः -** शिलालेख-स्तम्भलेखयोः इव सम्राजा अशोकेन लघुलेखानां स्थापना अपि भिन्नेषु स्थानेषु कृता । सर्वे लघुलेखाः प्राकृतभाषायां निबद्धाः ब्राह्मीलिप्यां च उत्कीर्णिताः सन्ति ।

## सम्राजः अशोकस्य लघु-लेखानां प्राप्तिस्थानानां साम्प्रतिकी अवस्थितिः

**1. रूपनाथः -** भारतवर्षस्य मध्यप्रदेशस्य कटनीमण्डले कैमूर-श्रृङ्खला अस्ति, तत्र 'रूपनाथ' नाम तीर्थकेन्द्रं वर्तते । यत् जबलपुरतः कटनी-पर्यन्तं रेलमार्गे 'स्लीमनाबाद' इति रेलस्थानकात् पश्चिमदिशि प्रायः 22.5 कि.मी. दूरे अस्ति । अत्र अशोकस्य लघु-शिलालेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे षट्-पंक्तयः[3] सन्ति ।

**2. सहसरामः -** भारतवर्षस्य बिहारप्रान्तस्य रोहतासमण्डले 'सहसरामः' (सासारामः) इति जनपदम् अस्ति । अस्मात् पूर्वदिशि प्रायः 3 कि.मी. दूरे 'चन्दनपीड'[4] नामकः पर्वतस्य गुहायाम् अशोकस्य लघुलेखः उत्कीर्णितः वर्तते । अस्मिन् लघुलेखे अष्ट-पंक्तयः सन्ति ।

**3. बैराट -** भारतवर्षस्य राजस्थानस्य राजधानी जयपुरतः ईशानदिशि 67 कि.मी. दूरे इदं स्थानमस्ति । बैराटनगरात् दक्षिणपश्चिमदिशि प्रायः 1.5 कि.मी. दूरे बौद्ध-विहार-द्वयस्य भग्नावशेषाः सन्ति, तेषां समीपे प्राचीनस्य स्तूपस्य चिह्नानि वर्तन्ते । अस्मिन् लघुलेखे अष्ट-पंक्तयः सन्ति ।

**4. कलकत्ता-वैराट -** भारतवर्षस्य राजस्थानप्रान्तस्य जयपुरमण्डले 'विराटनगरः' वर्तते । ततः प्रायः 3.7 कि.मी. दक्षिणदिशि वैराटनामकं स्थानमस्ति । ततः प्रायः 1.6 कि.मी.

1 CORPUS INSCRIPTIONUM INDICARUM VOLUME – I, INSCRIPTION OF ASOKA, 1877 A.D., Page -41

2 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 11.

3 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 111.

4 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 6.

ईशानदिशि बोजकपर्वते[1] अयं लघुलेखः प्राप्तः । अस्मिन् लघुलेखेऽपि अष्ट-पंक्तयः सन्ति ।

**5. गुजर्रा** - भारतवर्षस्य मध्यप्रदेशप्रान्तस्य दतियामण्डले वनस्थित-पर्वतस्य पाददेशे 'गुजर्रा' इति ग्रामः अस्ति । यस्यां शिलायाम् अयं लघुलेखः उत्कीर्णितः आसीत्, सः पर्वतः 'सिद्धस्य टोटिया'[2] इति प्रसिद्धः अस्ति । अस्य लघुलेखस्य एकं वैशिष्ट्यमस्ति यत्, तस्मिन् 'अशोक' इति शब्दस्य साक्षात् प्रयोगः दृश्यते – ''देवानं पियस अशोकराजस''[3] इति । अस्मिन् लघुलेखे पञ्च-पंक्तयः सन्ति ।

**6. मास्की** - भारतवर्षस्य कर्नाटक-प्रान्तस्य रायचूर-मण्डलस्य लिङ्गसुगुर-तालुकायां 'मास्की' नामकः नगरः वर्तते। तत्र अशोकस्य लघु-शिलालेखः उत्कीर्णितः प्राप्यते । राजनीतिकमहत्त्वकारणात् सम्राट् अशोकः एतेषु लघुलेखेषु स्व-सन्देशान् उत्कीर्णं कारितवान्। अस्मिन् लघुशिलालेखेऽपि 'अशोक' पदस्य साक्षात् प्रयोगः दृश्यते - ''देवानं पियस असोकस....''[4] इति । अस्मिन् लघुलेखे अष्ट-पंक्तयः सन्ति ।

**7. ब्रह्मगिरी** - भारतवर्षस्य कर्नाटकप्रान्तस्य चित्रदुर्गमण्डले 'चिन्नहग्गरी' नदी प्रवहति । तत्रैव 'ब्रह्मगिरी' नाम्ना एकः प्रसिद्धः पर्वतः अस्ति । अस्मिन् पर्वते विशालः शिलाखण्डः वर्तते, स्थानीयजनैः 'अक्षरगुण्डु'[5] इति नाम्ना अभिधीयते । तत्र सम्राजः अशोकस्य लघु-शिलालेखः अस्ति । अत्र लघुलेखद्वयमुत्कीर्णितं दृश्यते । अस्मिन् लघुलेखे त्रयोदश-पंक्तयः सन्ति ।

**8. सिद्धपुरः** - भारतवर्षस्य कर्नाटकप्रान्तस्य चित्रदुर्गमण्डले 'ब्रह्मगिरि' इति एकः प्रसिद्धः पर्वतः अस्ति । ब्रह्मगिरितः पश्चिमदिशि प्रायः 1.6 कि.मी. दूरे अपरः एकः पर्वतः विद्यते, यस्य नाम 'येनमन तिम्मय्यन गुण्डलु'[6] वर्तते । अस्मिन्नेव पर्वते सम्राजः अशोकस्य अयं लघुलेखः शिलायाम् उत्कीर्णितः अस्ति । अत्रापि लघुलेखद्वयमुत्कीर्णितम् अस्ति । अस्मिन् लघुलेखे द्वाविंशतिः पंक्तयः सन्ति ।

**9. जटिंग्-रामेश्वरः** - भारतवर्षस्य कर्नाटकप्रान्तस्य चित्रदुर्गमण्डले अयं लघुलेखः प्राप्यते। ब्रह्मगिरिपर्वतस्य पश्चिमोत्तरदिशि प्रायः 4.8 कि.मी दूरे अपरः एकः पर्वतः अस्ति, यस्य शिखरे जटिंग्-रामेश्वरस्य मन्दिरम् अस्ति । अस्य मन्दिरमार्गस्य आरम्भे एकस्मिन् सोपानस्योपरि

1 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 7.
2 मौर्य साम्राज्य का इतिहास, पृष्ठा – 611.
3 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 117.
4 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 118.
5 मौर्य साम्राज्य का इतिहास, पृष्ठा – 612.
6 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 7.

सम्राजः अशोकस्य लघुलेखः उत्कीर्णितः वर्तते । अत्रापि लघुलेखद्वयमुत्कीर्णितं दृश्यते । अस्मिन् लघुलेखे अपि द्वाविंशतिः पंक्तयः सन्ति ।

**10. एर्रगुडि -** भारतवर्षस्य आन्ध्रप्रदेशस्य कुर्नूलमण्डलस्य एकस्य ग्रामस्य नाम 'एर्रगुडी' अस्ति । इदं स्थानं मद्रास-रायचूर-रेलमार्गे शाखा-रेखायां 'गुटी' नाम रेल-स्थानकात् प्रायः 8 कि.मी. दूरे अस्ति । अस्य ग्रामस्य समीपस्थे 'येनकोण्डा'[1] इति (Elephant-hill) पर्वतस्य शिलासु सम्राजः अशोकस्य वृहच्छिलालेखाः उत्कीर्णिताः सन्ति, तत्रैव अशोकस्य लघुलेखः अपि उत्कीर्णितः वर्तते । अत्र लघुलेखद्वयमुत्कीर्णितं वर्तते । अस्मिन् लघुलेखे षड्विंशतिः[2] पंक्तयः सन्ति ।

**11. गोविमठः -** भारतवर्षस्य कर्नाटकप्रान्तस्य कोप्पलमण्डले अयं लघुलेखः प्राप्यते । 'सिद्धपुरतः' प्रायः 11 कि.मी. दूरे 'गोविमठ'नामकं स्थानमस्ति, यत् दक्षिण-रेलवे इत्याख्ये 'हासपेट्-गडग्'-रेलस्थानकयोः मध्ये स्थितः वर्तते । अस्य नातिदूरं गोविमठपर्वतस्य एकस्यां शिलायां सम्राजः अशोकस्य लघुलेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे नव-पंक्तयः सन्ति ।

**12. पालकीगुण्डु -** भारतवर्षस्य कर्णाटकराज्यस्य कोप्पलमण्डले अयं लघुलेखः प्राप्यते । गोविमठतः प्रायः 6.5 कि.मी. दूरे 'पालकीगुण्डु' नामकं प्रसिद्धं स्थानमस्ति । अत्र सम्राजः अशोकस्य लघुलेखः पालकीगुण्डु-पर्वतस्य एकस्यां शिलायाम् उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे सप्त-पंक्तयः सन्ति ।

**13. राजुल-मंडगिरिः -** भारतवर्षस्य आन्ध्रप्रदेशप्रान्तस्य कुर्नूलमण्डलस्य पट्टिकौडतालुके 'चिन्नतुलती' इति ग्रामस्य समीपे 'रामलिंगेश्वरः'[3] इति प्ररस्तरखण्डे सम्राजः अशोकस्य लघुलेखः उत्कीर्णितः वर्तते । एर्रगुडीतः 32 कि.मी. दूरे अस्य स्थानस्य स्थितिः । अत्र लघुलेखद्वयमुत्कीर्णितं दृश्यते । अस्मिन् लघुलेखे पञ्चदश-पंक्तयः सन्ति ।

**14. अहरौरा -** भारतवर्षस्य उत्तरप्रदेशस्य मिर्जापुरमण्डले 'अहरौरा' जनपदमस्ति । इदं स्थानं वाराणसीतः दक्षिणदिशि प्रायः 36 कि.मी. दूरे अस्ति । 'अहरौरा' समीपे एकस्य पर्वतस्य शिलायाम् अशोकस्य लघुलेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे एकादश-पंक्तयः सन्ति ।

**15. नित्तुरः -** भारतवर्षस्य कर्नाटकराज्यस्य बेल्लारी-मण्डलस्य शिरागुप्पा-तालुके 'नित्तुरः'

1 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 4.

2 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 124

3 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 6.

इति ग्रामः अस्ति । नित्तुरः ग्रामतः प्रायः 1.5 कि.मी. दक्षिणदिशि अयं लघुशिलालेखः उत्कीर्णितः दृश्यते । अस्मिन् लघुशिलालेखे 'अशोक' पदस्य साक्षात् प्रयोगः दृश्यते । अत्र लघुलेखद्वयमुत्कीर्णितं दृश्यते । अस्मिन् लघुलेखे द्वादश-पंक्तयः[1] सन्ति ।

**16. उद्यगोलम -** भारतवर्षस्य कर्नाटकप्रान्तस्य बेल्लारी-मण्डलस्य शिरगुप्पा-तालुके 'उद्यगोलम' नाम एकः ग्रामः अस्ति । ततः प्रायः 6 कि.मी. दूरे सम्राजः अशोकस्य लघुलेखः[2] उत्कीर्णितः वर्तते । अस्मिन् लघुशिलालेखेऽपि 'अशोक' पदस्य साक्षात् प्रयोगः दृश्यते । अस्मिन् लघुशिलालेखेऽपि 'अशोक' पदस्य साक्षात् प्रयोगः दृश्यते । अत्रापि लघुलेखद्वयमुत्कीर्णितं दृश्यते । अस्मिन् लघुलेखे त्रयोदश-पंक्तयः सन्ति ।

**17. बाहापुर (दिल्ली) -** भारतवर्षस्य नवदेहली नगरस्य दक्षिणदिशि 'बहापुर' इति ग्रामस्य समीपे एकः लघुशिलालेखः प्राप्तः । इदं स्थानं 'कालकाजी' मन्दिरात् उत्तरदिशि प्रायः 1 कि.मी. दूरे अस्ति । अस्मिन् लघुलेखे दश-पंक्तयः[3] सन्ति ।

**18. पानगुडारिया -** भारतवर्षस्य मध्यप्रदेशप्रान्तस्य सीहोरमण्डलस्य बुधनीत-तहसीलस्य 'पानगुडारिया' इति ग्रामे सम्राजः अशोकस्य एकः लघुलेखः उत्कीर्णितः वर्तते । अत्र अष्ट-पंक्तयः[4] सन्ति ।

**19. रतनपुरवा -** भारतवर्षस्य बिहारप्रान्तस्य कैमूरमण्डले 'रतनपुरवा' इति एकः ग्रामः अस्ति । नव-आविष्कृतः (2009 ई.) अयं लघुलेखः उत्तरप्रदेशस्य बिहारस्य च सीमायां कैमूर-पर्वतश्रृङ्खलायां वर्तते । अस्मिन् लघुलेखे नव-पंक्तयः[5] सन्ति ।

**20. सारनाथः -** भारतवर्षस्य उत्तरप्रदेशप्रान्तस्य वाराणसीनगरात् उत्तरदिशि प्रायः 5 कि.मी. दूरे 'सारनाथः' नामकं प्राचीन-स्थानमस्ति, यत्र भगवता बुद्धेन धर्मचक्रस्य आरम्भः कृतः । तत्रैव एकस्मिन् प्रस्तरस्तम्भे सम्राजः अशोकस्य लघुस्तम्भलेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे एकादश-पंक्तयः सन्ति ।

**21. साँची -** भारतवर्षस्य मध्यप्रदेश प्रान्तस्य रायसेनमण्डले 'साँची' नामकं स्थानं वर्तते, यत् विदिशातः 7 कि.मी. दूरे अस्ति । साँची-रेलस्थानकात् प्रायः 1.5 कि.मी. दूरे विशालः स्तूपः अस्ति, यस्य दक्षिणद्वारस्य समीपे एकः स्तम्भः अस्ति, यस्मिन् सम्राजः अशोकस्य

1 INSCRIPTIONS OF ASOKA, PAGE – 348.

2 ASOKAN SITES AND ARTEFACTS (A SOURCE BOOK WITH BIBLIOGRAPHY), PAGE- 101.

3 INSCRIPTIONS OF ASOKA, PAGE – 209.

4 ऐतिहासिक भारतीय अभिलेख, पृष्ठा – 94-95

5 https://jnanapravaha.org/new-discovery.php

लघुलेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे अष्ट-पंक्तयः सन्ति ।

**22. कौशाम्बी -** भारतवर्षस्य उत्तरप्रदेशप्रान्तस्य इलाहाबादनगरे 'प्रयागस्तम्भः' वर्तते। अस्मिन स्तम्भे सम्राजः अशोकस्य स्तम्भलेखस्य षट्-अनुच्छेदाः उत्कीर्णिताः वर्तन्ते । अस्मिन्नेव स्तम्भे 'रानी अभिलेखः' इत्यस्य लेखस्य उपरि अयं लघुलेखः उत्कीर्णितः दृश्यते। अस्मिन् लघुलेखे चत्वारः[1] पंक्तयः सन्ति ।

**23. रानी-अभिलेखः -** भारतवर्षस्य उत्तरप्रदेशप्रान्तस्य इलाहाबादनगरे 'प्रयागस्तम्भः' वर्तते । अस्मिन्नेव स्तम्भे अयं लघुलेखः उत्कीर्णितः अस्ति । अस्मिन् लघुलेखे पञ्च-पंक्तयः[2] वर्तन्ते ।

**24. रुम्मिनदेई -** नेपालदेशस्य रूपनदेई-मण्डलस्य भगवानपुरतहसीले[3] 'पडरिया' नाम ग्रामः अस्ति । ग्रामात् उत्तरदिशि प्रायः 2 कि.मी. दूरे 'रुम्मिनदेई-मन्दिरम्' अस्ति । अत्र एकः प्रस्तरस्तम्भः विद्यते । अस्मिन् एव स्तम्भे सम्राजः अशोकस्य लघुलेखः उत्कीर्णितः दृश्यते । अस्मिन् लघुलेखे पञ्च-पंक्तयः[4] दृश्यन्ते ।

**25. निगलीवा (निगली-सागरः) -** नेपालदेशस्य कपिलवस्तुमण्डले 'निगलीसागरः' इति एकम् ऐतिहासिकस्थानं वर्तते । इदं स्थानं नेपालदेशस्य प्रदेशस्य पादभागे विद्यते । स्थानमिदं उत्तरप्रदेशस्य बस्तीमण्डलस्य 'पिप्रावा' नामकात् स्थानात् उत्तर-पश्चिमदिशि प्रायः 11 कि.मी दूरे नेपालस्य तौलिवा-नामके स्थाने विद्यते । अत्र अशोकस्य लघुलेखः प्राप्तः, यः 'निगलिव' इति ग्रामस्य समीपे 'निग्लीसागरः' नाम विशाल-सरोवरस्य समीपे अस्ति । अस्मिन् लघुलेखे चत्वारः[5] पंक्तयः सन्ति ।

**26. अमरावती -** भारतवर्षस्य आन्ध्रप्रदेशस्य गुण्टुरमण्डलस्य 'अमरावती' इति स्थाने सम्राजः अशोकस्य एकः लघु-स्तम्भलेखः उत्कीर्णितः वर्तते । अस्य स्तम्भस्य अवस्था खण्डिता वर्तते । अत्र षट्-पंक्तयः[6] सन्ति ।

सम्राजः अशोकस्य त्रिविधेषु अभिलेखविषयेषु तेषां भौगोलिकस्थानानामवस्थितेः परिचयः अस्मिन् शोध-आलेखे अतीव-उपयोगिरूपेण वर्णितः। वर्तमानसन्दर्भे अस्य

1 अशोक के अभिलेख (प्रथम संस्करण), पृष्ठा – 187.
2 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 73.
3 ऐतिहासिक भारतीय अभिलेख, पृष्ठा – 84
4 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 74.
5 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 75.
6 प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), सप्तम संस्करण, पृष्ठा- 71

विवरणस्य महती उपयोगिता एषा यत् - ये एतान् अभिलेखान् पठितुं, शिक्षितुं, द्रष्टुं च इच्छन्ति, परन्तु एतेषां भौगोलिकस्थानानां विषये तथ्यात्मकसूचनाभावात् एतेषु स्थानेषु परिभ्रमण् कुर्वन्तः ते तान् द्रष्टुं न शक्नुवन्ति । सर्वकारपक्षेभ्यः पुरातत्वविभागात् अपि अस्मिन् विषये तेषां स्थानानां विषये प्रायः सूचना सम्यग्रूपेण न प्रदत्ता, विशेषतया बस् (लोकयान) स्थानकेषु, रेलस्थानकेषु, विमानस्थानकेषु, सार्वजनिकस्थानेषु सार्वजनिकसूचनाकेन्द्रेषु च प्रायः सूचना न प्रदत्ता अस्ति । एते मानचित्रे अपि स्पष्टतया न संयोजिताः । अतः समीपं गत्वा अपि जिज्ञासुकाः तान् अवलोकयितुं न शक्नुवन्ति । अस्य विवरणस्य मूलम् उद्देश्यं वर्तमानपरिस्थितौ एतेषां अभिलेखानां भौगोलिकस्थानानां विषये सूचनाप्रदानम् ।

## सन्दर्भग्रन्थसूची

1. CUNNINGHAM ALEXANDER, CORPUS INSCRIPTION INDICARUM (VOL-I), INSCRIPTION OF ASHOKA, OFFICE OF THE SUPERINTENDENT OF GOVERNMENT PRINTING, CALCUTTA, 1877 A.D.

2. HULTZSCH EUGEN, CORPUS INSCRIPTION INDICARUM (VOL- I), INSCRIPTION OF ASHOKA, PRINTED FOR THE GOVERNMENT OF INDIA AT THE CLARENDON PRESS, OXFORD, 1925 A.D.

3. SIRCAR DINESH CHANDRA, SELECT INSCRIPTIONS BEARING ON INDIAN HISTORY AND CIVILIZATION (VOLUME - I), UNIVERSITY OF CALCUTTA, CALCUTTA, 1942 A.D.

4. DESAI Z. A, STUDIES IN INDIAN EPIGRAPHY (Vol-I), THE EPIGRAPHICAL SOCIETY OF INDIA (GEETHA BOOK HOUSE), MYSORE

5. TALIM MEENA, EDICTS OF KING ASHOKA, ARYAN BOOKS INTERNATIONAL, NEW DELHI, 2010 A.D.

6. A COLLECTION OF PRAKRIT AND SANSKRIT INSCRIPTION, THE BHAVNAGAR ARCHEOLOGICAL DEPARTMENT UNDER THE AUSPICES OF HIS HIGHNESS RAOL SHRITAKHTSINGJI, G.C.S.I., LL.D,(CANTAB.), MAHARAJA OF BHAVNAGAR, 1956 A.D.

7. RASTOGI NARESH PRASAD, INSCRIPTIONS OF ASOKA, CHOWKHAMBA SANSKRIT STUDIES, VARANASI / 1990 A.D.

8. पाण्डेयः राजबली, अशोक के अभिलेख, ज्ञानमण्डल लिमिटेड, वाराणसी, 2022 ई.

9. वटव्यालः सुमिता, भारतीय अभिलेखसंग्रह ओ इतिहास – वीक्षन, सदेशः, कलकाता, 2013 ई.

10. चन्द्रः दिनेश, प्राचीन भारतीय अभिलेख, स्नेहरायः (सं), प्रकाशन विभाग, नई दिल्ली, 2007 ई.

11. जैनः सुदीपकुमार, सम्राट् खारवेल का ऐतिहासिक शिलालेख, श्री भारतवर्षस्य दिगम्बर जैन तीर्थ संरक्षिणी महासभा, नई दिल्ली, 2019 ई.

12. सरकारः दिनेशचन्द्र, वाजपेयी कृष्णदत्त (अनु ), भारतीय पुरालिपि विद्या, विद्यानिधि, दिल्ली

13. गुप्तः परमेश्वरीलाल, प्राचीन भारत के प्रमुख अभिलेख (खण्ड – 1), विश्वविद्यालय प्रकाशन , वाराणसी

14. विद्यालंकारः सत्यकेतु, मौर्य साम्राज्य का इतिहास (छठा संस्करण), श्री सरस्वती भवन, नई दिल्ली, 2000 ई.

* * *

ISSN : 2455-717X
व्युत्पत्ति
वर्ष : 8, अङ्क (01) जून–2023

# तद्धितार्थविमर्शः

**- सन्तोषकुमारमिश्रः***

तद्धितप्रत्ययाः सुबन्तशब्देभ्यः भवन्तीति वैयाकरणानां सिद्धान्तः वर्तते । एतेषां प्रत्ययानां विषये सिद्धान्तकौमुद्यां सप्तदशप्रकरणेषु वर्गीकरणं कृतमस्ति । एतेषां प्रकरणानां नामानि तु क्रमशः एवं सन्ति अपत्याधिकारः, रक्ताद्यर्थकाः, चातुरर्थिकाः, शैषिकाः, प्राग्दीव्यतीयाः, ठगधिकारः, प्राग्घितीयाः, छयदधिकारः, आर्हीयाः, कालाधिकारः ठञधिकारः, भावकर्मार्थाः पाञ्चमिकाः, प्राग्दिशीयाः, प्रागिवीयाः, स्वार्थिकाः, द्विरुक्तप्रक्रिया इति। एतेषांप्रकरणानुसारंकिञ्चिद्विस्तृतरुपेण परिचर्चां कुर्मः। तद्धित इति शब्दव्युत्पत्तिस्तु "तेभ्यः प्रयोगेभ्यो हिताः " अथवा सर्वेभ्यो लौकिकवैदिकेभ्यो हितास्तद्धिताः इति प्रकरणानामकरणविषये चन्द्रकीर्तिः वदति ।एवं उक्तः समास कथनान्तरं तद्धितस्तद्धिसंज्ञकः प्रत्ययो निरूप्यते। तस्य समासस्य हितः यद्वा तेषां पूर्वोक्तानां नामादीनामर्थान्तरप्रकाशनेन हितस्तद्धितः स निरूप्यते कथ्यते इत्यर्थः। अर्थात् समासबोधानन्तरं समासिकपदानां, सर्वनाम, विशेषणाद्यर्थान्तरप्रकाशने परमप्रयोजनत्त्वात् अस्य तद्धित इति नाम सार्थकम् अभूत् । येभ्यः प्रत्ययेभ्यः शब्दनिष्ठार्थस्यार्थान्तरप्रकाशनसमर्थः एव तद्धितः इत्युच्यते । यथा - दशरथस्य अपत्यं पुमान् - दाशरथिः ii. विनतायाः अपत्यं - वैनतेयः । इत्यादिषु अपत्याद्यर्थाः बोधिताः सन्तीति । लोके शब्दार्थाः अनेके सन्ति। तेषामर्थानाम्बोधनाय भगवता पाणिनिना स्वकीयशास्त्रे पञ्चभिः प्रकारैः प्रत्ययविभाजनं कृतमस्ति ।

तद्धितप्रत्ययाः नामप्रकृतिकाः क्वचित् प्रकृत्यर्थेन स्वार्थैकदेशस्य क्वचिच्च प्रकृत्यर्थेन स्वार्थस्य अन्वयबोधं जनयन्ति। यथा गर्गस्यापत्यं गार्गिः इत्यत्र गर्ग-शब्दात् "अत इञ्"[1] इति सूत्रेण इञ् अपत्यार्थे भवति। अपत्यमित्यस्य जन्यत्ववानित्यर्थः। तदेकदेशे जन्यत्वे

* **शोधच्छात्रः, व्याकरणविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली**

1 अ. सू. 4.1.15

निरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य गर्गस्यान्वयः, गर्गनिरूपितजन्यत्ववानिति बोधः। गार्ग्य, इत्यत्र "गर्गादिभ्यो यञ"[1] इति सूत्रेण गोत्रापत्यार्थे गर्गशब्दात् यञ् । गोत्रापत्यमित्यस्य स्वपुत्रनिरूपितसाक्षात्परम्परासाधारणजन्यत्ववानित्यर्थः। अपत्यं पौत्रप्रभृति गोत्रम्[2] इति सूत्रम् । पुत्रशब्दार्थः जन्यत्ववान् । तदेकदेशे जन्यत्वे निरूपितत्वसम्बन्धेन गर्गस्यान्वयः। तथा च गर्गनिरूपितजन्यत्वाश्रयनिरूपितसाक्षात्परम्परासाधारणजन्यत्ववान् इति गार्गीत्यतो बोधः। गार्ग्यस्य युवापत्यं गार्ग्यायणः इत्यत्र गार्ग्यशब्दात् यञिञोश्च इति सूत्रेण फक्प्रत्ययस्य युवापत्यमित्यर्थः। पित्रादिजीवनकालिकं स्वपुत्रनिरूपितसाक्षात्परम्परासाधारणजन्यत्ववत् युवापत्यमित्युच्ये। "जीवति तु वंश्ये युवा"[3] इति सूत्रात् ।

तदेकदेशे जन्यत्वे प्रकृत्यर्थस्य गार्ग्यस्य निरूपितत्वसम्बन्धेनान्वयः तथा जीवने गर्गस्य चान्वयः। तथा च गर्गादिजीवनकालिकः गर्गगोत्रापत्यस्यापत्यमयमिति बोधः। "तेन रक्तं रागात्"[4] इति सूत्रेण तेन रक्तमित्यर्थे माञ्जिष्ठमित्यत्र अण् प्रत्ययः भवति। रक्तत्वन्नाम– तत् सम्बन्धाधीनतदीयरूपारोपविषयत्वम्। रक्तशब्दः वर्णविशेषेरक्तौ यथा, गौरिति। प्रकृत्यर्थस्य मञ्जिष्ठस्य तदेकदेशे सम्बन्धे प्रतियोगितासम्बन्धेनान्वयः तथा च आश्रयतासम्बन्धेन रूपेऽन्वयः। तथा च भवति शाब्दबोधः मञ्जिष्ठप्रतियोगिकसम्बन्धाधीनः यः मञ्जिष्ठवृत्तिरूपप्रकारकः आरोपः तद्विशेष्यं वासः इति बोधः। शङ्खः पीतः इत्यारोपमादाय शङ्खादेरारोप्य पीतिमाश्रयहरितालरक्तत्वस्य वारणाय अधीनान्तमारोपे विशेषणं, पटादेश्चक्षुषा रक्तत्वस्य वारणाय तदीयत्वं रूपविशेषणम् । शूलशब्दादुखाशब्दाच्च सप्तमीसमर्थात् संस्कृतं भक्षाः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, इत्यर्थकेन शूलोखात् यत्[5] इति सूत्रेण शूले संस्कृतं मांसम् शूलमुरव्यम् उपरवपात्रविशेष्यः इत्यत्र यत् प्रत्ययो भवति। तद्धितार्थः संस्कृतैकदेशे संस्कारे पाकादिरूपे प्रकृत्यर्थस्य शूलोखादेः अधिकरणत्वेनान्वयः शूलाधिकरणसंस्कारकर्ममांसम्, उपरवाधिकरणकसंस्कारकर्म इति च बोधः।

तृतीयासामर्थ्याद् नक्षत्रविशेषवाचिनः शब्दाद् युक्तः इत्येतस्मिन्नर्थे नक्षत्रेण युक्तः कालः इति सूत्रेण पौषी रात्रीत्यत्र अण्प्रत्ययः अण्णन्तात् ङीपि पौषी इति भवति पुण्यनक्षत्रवाचकः शब्दः। कालश्चेत् स भवति। कथं पुनर्नक्षत्रेण पुण्यादिना कालो युज्यते। पुष्यादिसमीपस्थे चन्द्रमसि वर्तमाना पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति पुष्येण युक्तः कालः पुष्यसमीपस्थेन चन्द्रमसा युक्तः कालः। कालस्य नक्षत्रयुक्तत्वं च तन्नक्षत्रशशिभोगाश्रयत्वम्।

1 अ. सू. 4.1.105
2 अ. सू. 4.1.162
3 अ. सू. 4.1.163
4 अ. सू. 4.2.1
5 पा. सू. 2. 4. 17

तदेकदेशे भोगे कर्मतया तन्नक्षत्रान्वयः। पुष्यनक्षत्रकर्मकः शशिकर्तृको यो भोगः तदाश्रयः रात्रिः इति बोधः।

नागेशेनोक्तं तत्र तस्यापत्यम् इत्यादिसूत्रैर्विहितानामणादिप्रत्ययानामपत्यादिरर्थः। षष्ठयर्थश्च समुदायगम्यः। तेन औपगवः, अर्थात् उपगोः अपत्यं औपगवः, उपगुसम्बन्ध्यपत्यम् इत्यर्थः। अत्राप्येकार्थीभावाङ्गीकारात् विशेषणाद्यन्वयः, सास्य देवता[1], सास्य देवता अस्मिन्नर्थे प्रथमान्तादणादयः स्युरित्यर्थः। इन्द्रो देवता अस्य ऐन्द्रं हविः (आदित्यम् बार्हस्पत्यम्) इत्यत्र विशिष्टशक्त्या देवताविशिष्टं देयमथवा खण्डशः शक्त्या, देवता, देयम् च। भट्टनागेशेन मञ्जूषायां प्रतिपादितम्, देवताविशिष्टदेयं प्रत्ययार्थः[2] प्रकृत्यर्थः प्रत्ययार्थैकदेशे अभेदेन विशेषणम् । प्रदेयं च देवतासम्बन्धित्वेनैव प्रत्ययार्थः। इन्द्रादिपदस्य देवतात्वविशिष्टेन्द्रादौ शक्त्यभावात् तत्र देवतात्वेन इन्द्रादेर्बोधाय देवताप्रत्ययार्थः स्वीकृतः। तथा च ऐन्द्रं हविः इत्यस्य इन्द्राभिन्नदेवता सम्बन्धि हविः, बोधः जायते।

एकार्थीभावाङ्गीकारे हि सुन्दरस्योपगोरपत्यम्, सुन्दरः औपगवः उपगोर्देवदत्तस्य औपगवो देवदत्तस्य इत्यादिप्रयोगापत्तिरूपो दोषो नास्ति। यद्वा, देवतायां प्रदेये च भिन्नैव शक्तिः, अतो नैकदेशान्वयः, एवञ्च, अग्न्यभिन्नदेवतासम्बन्धी इति बोधः। प्रदेयञ्च सम्बन्धित्वेनैव प्रत्ययार्थः। प्रदेयमिति मन्त्रस्याप्युपलक्षणम् । नव्यास्तु वस्तुतः सिद्धान्ते तु ब्राह्मणाय गां ददाति इत्यत्र ब्राह्मणपदोत्तरचतुर्थ्याः उद्देश्यत्वमर्थः। तथा अत्रापि ऐन्द्रम् आग्नेयम् इत्यदावपि अग्न्यादिषु देवतात्वमेव तद्धितेनोच्यते। तथा च देवतात्वं प्रदेयं च प्रत्ययार्थः। तत्र प्रदेये देवतात्वस्य निरूपकतासम्बन्धेनान्वयः। प्रकृत्यर्थस्य अग्नौ आधेयतासम्बन्धेन देवतात्वेऽन्वयः। अग्निवृत्तिदेवतात्वनिरूपक इति बोधः। नन्वेवम्,

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवतासंगतिस्तत्र दुर्बलं तु पटं पटम् ।।[3]

इति मीमांसकोक्तं दौर्बल्यं कथमिति चेत् इत्थम् चतुर्थ्या वाक्यात् देवतात्वसम्बन्धलाभः। तद्धिते समानपदाभिधानश्रुत्येति श्रुतिवाक्यबलाधीनं तत्। देवतात्वस्य सम्बन्धिद्वयं सापेक्षत्वेन चतुर्थ्या द्वितीयसम्बन्धिनः पृथक्पदोपात्तत्वेन वाक्यान्तलाभः। प्रकृतेः तु तद्धिते सम्बन्धिद्वयस्याप्येकपदोपस्थाप्यत्वात् । श्रुत्या देवतात्वलाभः यद्वा प्रदेयमेव तद्धितप्रत्ययार्थः। स्ववृत्तिदेवतात्वनिरूपकत्वसम्बन्धेन प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयः इत्याहुः।

1 अ. सू. 4.2.23
2 सि.ल. मञ्जू, पृष्ठ, संख्या. 267
3 वै. सि. ल. मञ्जूषा पृष्ठ संख्या - 267

तदस्यां प्रहरणम्[1], इति क्रीडायां णः। सोऽस्य निवासः[2], सास्मिन् पौर्णमासी इत्येवं जातीयकेषु सास्य देवतेत्युदाहरण इव बोधः। तथाहि, तेन दीव्यति खनति जयति जितम्[3], इत्यनेन अक्षैदीर्व्यति, आक्षिकः इत्यत्र इक् प्रत्ययः अत्र तद्धितेन भासमानमपि देवनं न कारकान्वय योग्यक्रिया रूपम् ।

तेन तुल्यं क्रिया चेद्वतिः तेन इति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। यत् तुल्यं क्रिया चेत् सा भवति यथा – ब्राह्मणेन तुल्यं ब्राह्मणवदधीते। अत्र ब्राह्मणशब्दः तत्कर्तृकाध्ययने लाक्षणिकमः। सौष्ठवादिश्रमसाधारणो धर्मः। तत्र तस्येव इति सूत्रेण वतिप्रत्ययः, द्रव्यगुणतुल्ये भवति। यथा, मथुरावत्, पाटलिपुत्रे प्राकारः, मथुरावत्पाटलिपुत्रस्य विस्तारः तत्र सादृश्यं वत्यर्थः। माथुराप्रतियोगिकसादृश्य वत्पाटलिपुत्रे प्राकारः इति बोधः। यद्यपि उपमानोपमेययोः समानविभक्तित्वस्य नियमः तथापि अत्र उपमानानि सामान्यवचनैः " इत्यनेन ज्ञाप्यगत- उपमाने सप्तमी भवति। प्राकाराश्च-सादृश्यमूलकाभेदज्ञानविषयसाधारणो धर्मः। वस्तुतो मथुरायामिवेति वाक्य प्राकारादिपदाव्याहारेणैव बोधः। प्राकारयोश्च उपमानोपमेयभावः।

विधिवत् पूज्यते इत्यत्र, विधिमर्हतीति इति विग्रहे, तदस्मिन्, इति सूत्रेण वतिप्रत्ययः। विधिविषये योग्यतायाः हरिकर्मकं देवदत्तकर्तृकं पूजनमिति बोधः। विधिशब्देन तदुक्तः प्रकारः।

## भावप्रत्ययार्थो विचार्यते

तस्येति षष्ठीसमर्थाद् भावः इत्येतस्मिनर्थे त्वतलौ प्रत्ययौ भवतः। भवतोऽस्मादभिधानप्रत्ययौ इति भावः। भावशब्देन प्रवृत्तिनिमित्तमुच्यते। यथा अश्वस्य भावः अश्वत्वम् अश्वता गोता, गोत्वम्। मञ्जूषायां भट्टनागेशेन तु गुणक्रियाजातिसमुदायो द्रव्यमिति प्रकृतसूत्रभाष्यांशं व्याकुर्वता नागेशेन पूर्वं जातिगुणक्रियायदृच्छाशब्दभेदेन शब्दचतुष्टयान्तर्गतजातिशब्दस्थले शब्दशक्तिः स्वभावात् जात्यतिरिक्तसमुदायस्य विशेष्यत्वं दर्शयित्वा गुणशब्दस्थले गुणातिरिक्तसमुदायस्य विशेष्यत्वं शब्दशक्तिस्वभावात्। गुणस्य विशेषणत्वम् एवं प्रकारेण क्रियाशब्दस्थलेऽपि क्रियातिरिक्तसमुदायस्य विशेष्यत्वं क्रियायाः विशेषणत्वम् यदृच्छाशब्दस्थलेऽपि एवं प्रकारेण भविष्यति।

घटत्वमित्यादौ प्रकृतिः शब्दस्वरूपपरा, तत्तद्रूपेण प्रकारस्त्वाद्यर्थः। स चाकाङ्क्षावशात्

1 अ. सू. 4. 2.57
2 अ. सू. 4.3.89
3 अ. सू. 4.4.42

प्रकृति-जन्यबोधीयमुख्यविशेष्यतानिरूपितप्रकारताश्रय एव। तेन राजपुरूषः इत्यादौ राजत्वादेः प्रकारत्वेऽपि न क्षतिः। जन्यबोधं प्रकारत्वं तु संसर्गः एवञ्च गोत्वमित्यादौ गोशब्द जन्यबोधप्रकारो गोत्वमित्यर्थः। स च प्रकारः प्रवृत्तिनिमित्तभूत एव।

अत एव शाब्दबोधे शब्दस्यापि भानमितिवादिनां मते घटत्वमित्यादौ न शब्दभावप्रत्ययः। तथा च भाष्यम् – सर्वे भावाः स्वेनार्थेन भवन्ति स तेषामर्थ इति। तदभिधाने त्वतलौ भवतः इति। भवन्ति वाचकत्वेन प्रवर्त्तन्ते इति भावाः शब्दाः ते स्वस्य वाच्यो योऽर्थः तेन भवन्ति वाचकत्वेन प्रवर्त्तन्ते अर्थ प्रत्यायनार्थं शब्दप्रयोगात्। शब्दभवनेऽर्थस्य करणत्वविवक्षया तृतीया। यत्तदोर्नित्यसम्बन्धात् यस्मादित्यपेक्षते प्रवृत्तिनिमित्तवशाद् वाच्यार्थेन करणेन स्वप्रत्यायनाय लोके शब्दाः प्रयुज्यन्ते स प्रवृत्तिनिमित्तोऽर्थः। प्रागुक्तसम्बन्धेन शब्दसम्बन्धी भावप्रत्ययार्थः।

प्रवृत्तिनिमित्तं घटादिषु घटत्वादिजातिः शुक्लादिशब्देषु गुणाः पाचकादिशब्देषु क्रिया राजपुरूषादिशब्देषु सम्बन्धः। डित्थादिषु शब्दस्वरूपमेवेति। प्रवृत्तिनिमित्तत्वं क्वचित्प्रकारस्य यथा घटादिपदस्थले तत्पदजन्यबोधीयप्रकारता घटत्वे क्वचित्संसर्गस्य यथा – औपगवः राजपुरूषः इत्यादौ। प्रकृतिजन्यबोधे प्रकारो भावः इति लक्षणे प्रकारेति पदं मुख्यविशेषतानिरूपितविषयताश्रयत्वेन संसर्गस्याप्युपलक्षकम्, अथवा औपगवः राजपुरुषः इत्यादौ सम्बन्धतया प्रकारतया च भानं भवति। कैयटास्तु जातिमात्रवाचिभ्यः शब्दस्वरूपे भावप्रत्ययः। अर्थे जातौ शब्दस्वरूपमध्यस्यते यो गो शब्दः, स एवार्थः इति ततः शब्दस्वरूपमेव प्रवृत्तिनिमित्तम् नान्यत्।

* * *